इत्यभिषेकः अथप्रदक्षिणा सनत्कुमारसंहितायां प्रदक्षिणानमस्कारौ सर्वाभीष्टप्रदा
उभौ पूजांते च सदा कार्यौ भोगमोक्षार्थिभिर्नरैः शिवरहस्ये शिवप्रदक्षिणान्यायं सर्वं
नश्यति तत्क्षणात् अथ दक्षशिवधर्मे प्रदक्षिणमितीरितं प्रदक्षिणा विनाशं च पातकं
नास्ति मृत्तले तस्मात्प्रदक्षिणेनैव सर्वपापं विनाशयेत् शिवप्रदक्षिणेनैव सर्वाभीष्टं
प्रसाधयेत् कूर्मपुराणे प्रदक्षिणं द्विजः कुर्यात्पंचब्रह्माणि वै जपन् पंचब्रह्माणि सद्यो
जातादि पंच मंत्राः प्रदक्षिणासंख्यामाह शिवरहस्ये शिवप्रदक्षिणं कुर्यान्नित्यमयोत्त
रशतं सहस्रमयुतं लक्षं कोटिरन्येन कारयेत् सनत्कुमारसंहितायां शिवे प्रदक्षि
णं कुर्यान्नित्यमयोत्तरशतं सहस्रमयुतं लक्षं कोटिरन्येन कारयेत् सनत्कुमारसंहि
तायां लैंगे शिवप्रदक्षिणा कार्या द्वादशैकादशाथवा सौरपुराणे प्रदक्षिणात्रयं कुर्या
च्छिवस्यायतने नरः इति अन्यत्र च एकां चंड्यां रवेः सप्त तिस्रो दद्याद्विनायके चत
स्रो विष्णवे दद्याच्छिवे तिस्रः प्रदक्षिणाः अत्र शाक्ताशाक्तपरत्वेन व्यवस्था तदुक्तं
शिवरहस्ये प्रदक्षिणात्रयं कुर्यात्तथा पंच दशाथवा अष्टौ वा दश वा कार्या सधिका

षपिशांकितः नैकंप्रदक्षिणंकुर्यात्सोमस्यपरमात्मनः एकांप्रदक्षिणांकृत्वाशंभोः पुण्यास्र
हीयते प्रदक्षिणायज्ञैर्नैनैवकार्यमहेश्वरे कालभेदात्संख्याभेदमाह शिवरहस्ये प्रातः
शिवार्चनेदेवपञ्चकार्याःप्रदक्षिणाः मध्याह्नेचापिपञ्चैकादशसायाह्निसादरंप्रदक्षि।
णप्रकारः स्कांदे वृषभांतरितोभूत्वापीठकांतरमेवच प्रदक्षिणंनकुर्वीतकुर्वन्नकि
ल्बिषमश्नुते देवीपुराणे सव्यंव्रजेत्ततोऽसव्यंप्रणालंनैवलंघयेत् अस्यापवादो
नारदीये रसलिंगंवाणलिंगंपार्थिवंगंडकोद्भवं प्रदक्षिणंप्रकुर्वीतसव्येनैवययोदि
तं सोमसूत्रंचयंयत्रयत्रवाबिल्वमंदिरं अपसव्यंनकुर्वीतसव्येनैवप्रदक्षिणं आ
श्रमभेदेनसव्यापसव्यव्यवस्थामाह पाद्मे अपसव्यंयतीनांतुसव्यंतुब्रह्मचारिणा
सव्यापसव्यंगृहस्थस्यशंभोःप्रोक्तंप्रदक्षिणं सव्यंसव्यंविजानीयादपसव्यमसव्य
कमिति स्कन्दसंहितायां ज्योतिर्लिंगेरत्नलिंगेस्वयंभुविनयेवच वृषचंडादिनियमः
सुरेश्वरिनविद्यते आदित्यपुराणे पश्चिमाभिमुखंलिंगंलिंगंनंदिविवर्जितं गि
रिलिंगंस्थललिंगंजललिंगंतथैवच लिंगेष्वेतेषुसर्वेषुकुर्यात्सर्वप्रदक्षिणं पश्चिमा

मृतंवविश्वेश्वरादि गिरिलिंगंत्र्यंबकादि स्थललिंगंकाश्यपादि जललिंगंवरुणेश्वरादि अ
ग्निपुराणे सर्वेदिनमष्टमभागे विभोः कुर्यात्प्रदक्षिणं सोमसूत्रादिनियमोनास्ति विश्वेश्व
रालये अथवा वृषंचंडं वृषंचैवसोमसूत्रंपुनर्वृषं चंडंचसोमसूत्रंचपुनश्चंडंपुनर्वृष
मिति वचनस्य प्रदोषपठितत्वात्प्रदोषे सर्वलिंगेषुप्रदक्षिणाकार्या अतएव पश्चिमाभि
मुखत्वादिप्रतिप्रसवंवाधित्वा अयमपिप्रदोषेसर्वलिंगेषु वृषंचंडमित्युक्तप्रकारेण वि
श्वेश्वरेव्यासेनप्रदक्षिणाकृतेति सनत्कुमारसंहितायां तथाशिवरहस्येपि सव्यास
व्यविधानेनप्रदोषेशंकरालय इतिप्रदोषपुरस्कारेणैवसव्यासव्यप्रदक्षिणंविहि
तं अथवावृषंचंडमितिप्रासादप्रदक्षिणविषयं शिवालयेषुयःकुर्यात्सव्यासव्यप्रद
क्षिणमिति पाद्मे शिवालयोपादानात् प्रदक्षिणात्रयंकुर्यात्यःप्रासादसमंततः स
व्यापसव्यन्यायेनसकृत्पापविनिर्गत इति लैंगेपिप्रासादपदोपादानाच्च शिवरहस्येपि
वृषंचंडं वृषंचैवसोमसूत्रंपुनर्वृषमित्युपक्रम्य एवंप्रदक्षिणंकार्यंधन्यःशंकराल
ये इत्युपसंहारे आलयपदोपादानाच्च अथवाशांकराशांकरविषयं तत्रापिशांकरे
नापिप्रदोषेसर्वथाकार्यं तदुक्तंशिवरहस्ये शांकरेतुसर्वदाकार्यंसव्यासव्यप्रदक्षि।

णं इदं कार्यं प्रदोषेषु शक्तिहीनैरपि द्विजैः प्रदक्षिणायां नियमश्चोक्तो लैंगे शिवप्रदक्षिणं कुर्या
न्मंडुगत्या शुचिर्नरः नतिर्यग्नातिधावन्न शनैः कुर्यात्प्रदक्षिणं भविष्ये ग्रासन्नप्रसवा
नारी जलपूर्णघटं तथा उद्वहंती शनैर्याति तथा कुर्यात्प्रदक्षिणं पदेपदांतरं गत्वा करौ चल
नवर्जितौ वाचा स्तोत्रं मनो ध्यानं चतुरंगं प्रदक्षिणं नारदीये शिवप्रदक्षिणायां तु मौनं
कार्यं प्रयत्नतः कृतांजलिपुटैर्देव शिवस्मरणपूर्वकं बृहन्नारदीये शिवप्रदक्षिणी
कुर्वन्सोमसूत्रं न लंघयेत् लंघयित्वैकमेकैकं स्यात् लंघयुतत्रयं सोमसूत्रमा
नं स्थितं न दोषः वदे प्रासादविस्तारसमानसूत्रं सोमस्य सूत्रं दिशि सोमसूत्रं सूत्राद
हि लंघनतो न दोषः सदोषमभ्यंतरलंघनेन अस्यार्थस्तेनेव कृतः प्रासादलिंगमव
धीकृत्य भित्तिपर्यंतं सोमसूत्रमानं तावन्मात्रं भित्तेर्वहिर्न लंघनीयं कस्यां दिशि।
सोमस्य दिशि सोमश्चंद्रस्तस्य दिगुत्तरा तस्यामित्यर्थः ततोऽग्रे न सोमसूत्रं तत्कृते लंघने
न दोषः किंत्वेकमेकं प्रदक्षिणाफलं न दल लंघने त्वयुतत्रयप्रदक्षिणाफलं स्यादि
त्यर्थः यथाश्रुतव्याख्याने त्वेकमेकं स्यादिति नोपपद्यते न हि तल्लंघनस्य निषिद्धत्वात्
सोमस्य दिशीत्युपलक्षणं तेन प्रणाली न लंघयेदित्यर्थः काष्ठलोष्ठादिभिराच्छिन्नायां

तुनदोषः तदुक्तं सूत्रसंहितायां कार्यं लोपादिभिः छिन्ने लंघने नैव दुष्यति सोमसूत्रमनुल्लं
घ्य गर्भे कार्या वृषो यदि भवेद्गर्भे नो चेत्तत्र न सर्वथा सोमसूत्रमनुल्लंघ्य गर्भेस वृषभोपि
च विहितं वाच्च विहितं सोमसूत्रं न लंघयेत् वहिश्चापिहितं सूत्रमुल्लंघ्यं नैव सर्वथा
मोहादपिहितं सूत्रमुल्लंघ्य प्राप्नोति यातनां सोमसूत्रद्वयं यत्र चैत्यके सोमसूत्रद्वयं य
त्रास्ति तत्र सोमसूत्रलंघने न दोषः प्रदक्षिणा देवागारस्य गर्भे न कार्या यस्य कस्यापि
देवस्य सान्निध्यात्स्नानजलंघने महाहानिर्भवेत्तस्माद्बहिः कार्या प्रदक्षिणेति शिवध
र्मोत्तरे दोषोपपादनात् नंदीश्वरयोर्मध्ये न गंतव्यं कदाचनेति [illegible]तरागमने
निषेधाच्च शिवरहस्ये प्रदक्षिणप्रकारस्तद्विधौ विदसंमतः [illegible] सव्यापसव्यः स
व्यश्च तत्राद्यो विधिरुच्यते वृषं चंडं वृषं चैव सोमसूत्रं पुनर्वृषं चंडं च सोमसूत्रं च
पुनश्चंडं पुनर्वृषं एतत्प्रदक्षिणोक्तानि स्थानानि निवसत्तम ततान्युल्लंघनीया
नि वेदमार्गरतैर्द्विजैः प्राग्द्वारं देवदेवस्य वृषस्थानं प्रकीर्तितं वृषस्यानुसरं वक्ते
यं शिवाभिमुखं सत्तम देवस्य नैऋतं स्थानं चंडस्थानं प्रकीर्तितं पश्चिमाभिमुखे
लिंगे स्थानमेतदुदीरितं प्राङ्मुखे शिवलिंगे तु चंडस्थानं द्विजोत्तम ईशानभागे

लिं०चं०
६२

6

विज्ञेयमन्यत्र तु न सर्वथा महेशस्योत्तरं स्थानं सोमसूत्रस्थलं स्मृतं पूर्वाभिमुखलिंगे तु नि
यमोऽयं प्रकीर्तितः पश्चिमाभिमुखे लिंगे सोमसूत्रं शिवस्य तु पूर्वस्यां तु विज्ञेयमन्य
त्र तु न सर्वथा त्रीण्येतानि स्थलान्येव नवस्थानानि सत्तम एतेष्वेव त्रिरावृत्त्या तान्येवा
त्र पुनः पुनः यत्नेनावर्तनीयानि नवतां यान्ति नान्यतः उपविश्य वृषस्थाने संकल्प
विधिपूर्वकं कृतांजलिपुटो मौनी चंडस्थाने व्रजेत्ततः ततो वृषेशमभ्यर्च्य सोमसूत्रं
व्रजेद्द्विजाः सोमसूत्रमनुल्लंघ्य चंडस्थानाद्वृषं व्रजेत् स्थानान्येवं समावृत्य वृषभे
शं पुनर्यदा प्राप्नुयान्नियतो भक्त्या तु देवं स्यात्प्रदक्षिणं सव्यापसव्यरूपेऽस्मिन्वै
दिकेन प्रदक्षिणे प्रदक्षिणविधिः प्रोक्तो जाबालेरयमेव हि एवं प्रदक्षिणं कार्यं
प्रत्यहं शंकरालये यद्यत्र मोहाद्यास्मसद्दास्मादन्यथा ध्रुवं दिवा संध्यासु कर्त्त
व्यमेवमेव प्रदक्षिणं इदं प्रदक्षिणं नित्यं द्विजमात्रस्य सत्तम सव्यासव्येन कर्त्तव्यं
तदपि श्रुतिचोदितं तदपि द्विजमात्रस्य नित्यमेव न संशयः पश्चिमाभिमुखलिंगल
क्षणमुक्तं सितांतभ्रोस्वरे लिंगानां पश्चिमा योनिः प्रभवाय यतस्ततः पश्चिमाभि
मुखं प्राज्ञैर्योनिस्थामिति तद्विदः इति प्रदक्षिणा प्रथमनमस्कारः ब्रह्मवैवर्ते

दुर्गा
६२

पूजयित्वा महादेवं लिंगरूपिणमव्ययं प्रदक्षिणात्रयं कृत्वा प्रणमेद्दशपंचच लैंगे
साष्टांगो दंडवद्भूमौ प्रणामो भक्तिपूर्वकं कर्त्तव्यः श्रीमहेशाय देवदेवाय सर्वदा
शिवधर्मोत्तरे ये कुर्वंति नमस्कारमीश्वराय कचित् संपर्कात्कौतुकाल्लोभात्तेवि
मानैः प्रयांति च काशीखंडे लिंगमभ्यर्चितं दृष्ट्वा यः कुर्यात्प्रणतिं सकृत् संदेहो
जायते तस्य पुनर्देहनिबंधने कूर्मपुराणे ये नमंति विरूपाक्षमीशानं कृत्तिवास
सं प्रसन्नचेतसो नित्यं ते यांति परमं पदं तथा च व्यासः एवंविधे कलियुगे दोषा
णामेकशोधनं कूर्मपुराणे नमस्कुर्यान्महादेवं ऋतं सत्यमिती सत्यमिती श्रु
रं अष्टांगानुक्तानि तत्रैव जानुबाहुशिरश्चक्षुर्गंडं तांगाष्टकं यदा दंडवत्प्रण
तास्तत्तदष्टांगनतिर्भवेत् साष्टांगनमस्काराकरणे प्रत्यवायोप्युक्तस्तत्रै
व यः साष्टांगं महादेवं न नमेत्सावधानतः सदग्धांगइतिज्ञेयः सप्तसप्तन
संशयः लैंगे शिवस्याग्रे नमस्कारः शिवद्वेषकृतिस्मृतः सपुण्यनाशकस्तस्मा
त्सत्कर्त्तापापकृद्भवेत् पतित्वा दंडवद्भूमौ उत्थायोत्थाय भूरिशः षण्मासान्प्र
कर्त्तव्याः शंकराय महात्मने यत्संक्रांतेषु रवेः दंडप्रणामप्राद्यः स्यात्प्रणामो

यनमस्कृतिः अष्टांगैरथपंचांगैस्त्रिभिरंगैस्त्रिधास्मृतः शिरसा हस्तयुग्मेन कर्णाभ्यां
चिबुकेन वा बाहुभ्यां भवमष्टांगैः संस्पृश्य प्रणमेच्छिवं शिरो हस्तौ च जानुभ्यां पंचां
गैः प्रणमेच्छिवं शिरसा हस्तयुग्मेन त्रिभिरंगैर्नमेच्छिवं शिरो हस्तौ च जानुभ्यां पं
चांगैः प्रणमेच्छिवं शिरसा हस्तयुग्मेन त्रिभिरंगैर्नमेच्छिवं यथोचितं नमेद्देवं दे
शकालाद्यपेक्षयेति तद्दशकविषयं देशकालाद्यपेक्षयेति नैवोक्तत्वात् स्कांदे
उत्थायोत्थाय साष्टांगान्प्रणामान्विंशदुत्तमान् यः करिष्यति यत्नेन स पापेभ्यो
विमुच्यते कौर्मे प्रणमेन्निर्महादेवं दंडवद्भेयथा तदा पतंति पापगिरयो वज्रसंता
डिता इव यः शंकराय साष्टांगं प्रणामं न करिष्यति स दग्धांगोऽग्निकुंडेषु पतितो
वसतिष्यति संख्या चोक्ता तत्रैव सदाशिवं नमस्कुर्यान्मंत्रेण सहस्रं शतं शिवरहस्ये
एकविंशतिकर्त्तव्याः प्रणामाः पार्वतीपते एकादशाथवाष्टौ वा नातो न्यूनाः कदा
चनेति लैंगेपि नमस्काराष्टकं कार्यमधिकं शक्तिरस्ति चेत् ततो न्यूनं न कर्त्तव्यं श
क्तिहीनैरपि द्विजैः यस्तु नमस्कारत्रयं कुर्यान्महादेवे सदा नर इति तदल्पशक्तवि
षयं ब्रह्मवैवर्त्ते अग्रे पृष्ठे वामभागे समीपे गर्भमंदिरे जपहोमनमस्कारान्न कुर्या

देवतालये अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः वामभागे भवेन्नाशो दक्षिणे सर्वकाम
दः अत्र दक्षिणभागो देवस्य नत्वात्मनः तदुक्तं ज्ञानरत्नमालायां देवस्य दक्षिणे भा
गे नमस्कारं प्रकल्पयेत् न प्राच्यामग्रतः शंभोर्नैऋते योषिदाश्रये न प्रतीच्यां यतः पृ
ष्ठं तस्माद्दक्षं समाश्रयेत् नतु ब्रह्मयज्ञसूक्तं कृत्वा मम निर्वाणमंडपे देवस्य दक्षिणे
भागे स्थितत्वान्निर्वाणमंडपे नमस्कारत्रयं कृत्वा सर्वपापैः प्रमुच्यते शंभ्वादिकाशीखंडे
विश्वेश्वरस्य पश्चिमाभिमुखत्वात् मुक्तिमंडपस्य वामभागत्व संभवात् तत्र नमस्कार
विधानमनुपपन्नं स्यादिति चेन्न अत्र तु देवस्य दक्षिणभागे स्थितत्वान्निर्वाणमंडपे इ
त्यनेन विशेषवचनेन मुक्तिमंडपे नमस्कारविधानेन सामान्यनिषेधबाधसंभवात्
केचित्तु पशोः पशुपतेरग्रे दंडवत्पतितस्य हि पतंति पातकाः सर्वे नोत्तिष्ठंति कदाच
नेति विशेषवचनेन सामान्यनिषेधं बाधित्वा शंभोरग्रे एव नमस्कारः कार्य इत्याहुः
इति नमस्कारः शिवपूजायां उदङ्मुखत्वमावश्यकं तदुक्तं स्कंदसंहितायां स्नात्वा शु
द्धासने देशे गोमयेनोपलेपिते समासीनः सदा मौनी निश्चलोदङ्मुखः शुचिः सो
मशंभुना देवस्य दक्षिणभागे समासीनः सुखासने अंतरात्मा विनीतात्मा न्यसेन्मंत्र;

करद्वये उदङ्मुखस्त्वेकारस्त्वामुक्तं पूर्वमेव नद्याच्यामृतः शंभोरिति कृत्यकल्पतरौ गौतमः शिवार्च
नं सदा ध्येवं शुचिः कुर्यादुदङ्मुखः दृष्टस्यानिष्टकालभेदेन हि भेदमाह शिवार्चनं सदा कार्यं भुक्ति
मुक्तिप्रदं नृणां प्राक्याच्यामोदगाम्यस्तु प्रातः सायं निशामुखे इति अथ नैवेद्यनिर्णयः कालिका
पुराणे स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासाजलमाविशेत् सौरपुराणे वरं विषमपि स्वर्वं स्वयं नैव
भक्षयेत् विषमेकाकिनं हन्ति शिवस्वं पुत्रपौत्रकं लैंगे शिवस्वपरिरक्षार्थं गुः स्पर्शनीया
न साधुभिः तेन कर्मविपाके ततत्तत्कोशैः रवीकसः सौरपुराणे न धारयेच्च निर्माल्यं भ
क्षयात्लोभान्न भक्षयेत् भक्षणान्नरकं गच्छेत् चिलं घ्नच विमूढधीः ततत्स्नानपूजाद्यं
प्रतिगृह्णानिराकरः यत्र नैवेद्यनिर्माल्यमलं भुक्त्वा पूजयेच्छिवं ब्रह्माण्डपुराणे भूप्रदेशो
यथा कश्चित्त्वदेहमलदूषितः अत्र संस्पर्शपो भवेत्सोपि योयस्यांगमलं स्पृशेत् तस्मात्तु स
स्पृशोद्विंगं नरो निर्माल्यदूषितः शिवपुराणे न धारयेत्क्वचिच्छंभोर्निर्माल्यं न च भक्षयेत्
इत्यादिनिषेधाः अथ विधयः तथाजावालोपनिषत् रुद्रभक्तं भंजीत रुद्रपीतं पिबेत् रुद्र
घ्रातं जिघ्रेत रुद्रेणात्तमश्नन्ति रुद्रेणपीतं पिबंति रुद्राघ्रातं जिघ्रति तस्माद्ब्राह्मणाः प्रशांत
मनसो निर्माल्यमेव भक्षयंति लैंगे पुष्पं फलं सुगंधं च वस्त्राण्याभरणानि च शिवार्पिता

ग्राह्यपात्री

दुर्गा
६५

निर्मालीकुर्याद्दन्यथा किल्बिषी भवेत्। शिवागमे शिवनिर्माल्यं गन्धीतैव शिवद्विजान्। स्वयमेवाददा
नस्तु नरकं प्रतिपद्यते। सनत्कुमारे शिवः। ब्रह्मचारी शुचिर्भूत्वा निर्माल्यं यस्तु धारयेत्। तस्य पापम
हं सर्वं नाशयामि न संशयः। ब्रह्माण्डे। मत्वमन्त्रेण यत्नेन निवेद्यं भ्नाति यः सदा। स भूपालैः
सर्वैर्नाम भवत्येव हि सर्वथा। अतीतानागतं ज्ञानं भूपालत्वं च चराचरं। जातिस्मरत्वं सौंद
र्यमन्नं नैवेद्यस्य भक्षणात्। मन्नैवेद्यमनुच्छिष्टमन्यानुच्छिष्टमुत्तमं। योऽश्नाति सततं सर्वेत्नं
स भूपालोऽपि जायते। निर्माल्यसलिलं पीत्वा देवदेवस्य शूलिनः। क्षयापस्मारकुष्ठाद्यैः
सद्यो मुच्येत बंधनात्। निर्माल्यं परमं पुण्यं नैवेद्यं पापनाशनं। ब्रह्मचारी गृहस्थानां य
तीनां च विमुक्तिदं। निर्मलत्वाच्च निर्माल्यं नृणां नैर्मल्यकारणं। यद्यदास्ति हि ते लोके
तत्तद्द्रव्यमयं च तत्। शिवलिंगार्पितं कुर्यात्तत्तदनुष्यति शंकरः। उपवाससहस्राणि प्राजा
पत्यानि च। शिवप्रसादशिक्थस्य कोटिशेनापि नो समाः। पत्रं पुष्पं फलं तोयमं
न्नपानादिमौषधं। शिवार्पितं विना भुंक्ते सद्यो भवति किल्बिषीत्यादि विधयः। तत्र व्य
वस्थामाह नारदः। शिवानुभक्तमाखिलं निर्माल्यं परिभाषते। भोज्यं धार्यमिति द्वेधा

धारयेत्

षड्विधं च तदिष्यते देवस्वं देवताद्रव्यं निवेद्यं च निवेदितं चंडद्रव्यं बहिःक्षिप्तं निर्माल्यं षड्विधं
तथा देवस्वं ग्रामभूम्यादि दासीदासचतुष्टयं हेमरूप्यकरत्नादि देवद्रव्यमिति स्मृतं यत्संक
ल्प्य च देवाय पत्रपुष्पं फलं जलं अन्नपानादि तत्सर्वं निवेद्यमिति कीर्त्तितं एतत्त्रिविधं नि
र्माल्यमनर्हमिति कथ्यते प्रसादाद्भोजनं कुर्वन्नेमो स्यादमंगलः शिवद्रव्यापहारेण
नरकं यात्यसौ नरः शिवोपभुक्तं स्वगंधमन्नपानादिकं तथा निवेदितमिति प्रोक्तं सर्वं
पापहरं परं स्थापितं विधिना लिंगं सर्वैर्देवासुरैर्नरैः एतत्त्रिविधनिर्माल्यं चंडेशोऽधि
कृतः शिवः बहिःक्षिप्तमनर्हं स्यादन्यद्रव्यत्वकारणात् पिशाचानां च सर्वेषामधि
कारोत्र सर्वथा निर्माल्यं षड्विधे भोज्यमेकमेव निवेदितं एतेयानि विधायकवचना
नि तानि सर्वाणि निवेदितविषयाणि वेदितव्यानि यानि निषेधवचनानि तानि चं
डद्रव्यादि पंचविधनिर्माल्यविषयाणीति व्यवस्था वेदितव्या न तु केवलं चंडादिद्रव्य
स्यैव निषेधः किंतु शिवे निवेदितस्यापि भोजननिषेधोऽवगम्यते तथा च मनुना सामा
न्येन नैवेद्यभोजननिषेधः क्रियते शूद्रान्नं स्तजकान्नं वै नैवेद्यं श्राद्धमेव च पतिता
न्नं समूहान्नं राजान्नं चैव वर्जयेत् यद्यप्यत्र निर्माल्यशब्दाभावान्नैवेद्यनिषेधः

शिवेतरदेवताविषयस्त्वुच्यते तदिदमासां स्कंदपुराणे विष्णुशिवोभयनिवेदितभोजननि
षेधोव्यवह्रियते निर्माल्यंचनिवेद्यंचविशेषेणविवर्ज्जयेत् रुद्रेणभुक्तं निर्माल्यंनतथा
देवतांतरैः नैवेद्यंविष्णुनाभुक्तंन तथान्यदेवतांतरैः निर्माल्यंचनिवेद्यंचभुक्त्वाचांद्र
यणंचरेत् शिवपुराणे निर्माल्यस्यनघ्नेदोषोधारणेचविशेषतः नधारयेत्कंचिविष्णो
र्निर्माल्यंचनभक्षयेत् एवंशापकवचनवहुत्वदर्शनात् प्रायेणशिवनिवेदितस्या
पिप्रतिषेधोऽवीरइतिचेत्सत्यं शिवपुराणवचननिषेधस्यविशेषाभावात् वंगादिदे
शविषयत्वेपिविरोधाभावः यत्रविष्णुनिवेदितेनसह शिवनिवेदितस्यापिस्कंदपु
राणेभोजननिषेधवचनं तदुक्तंभुक्तंभुंजीतरुद्रपीतंपिवेत्रुद्राघातंजिघ्रेत् रुद्रे
णभुक्तमश्नंतिरुद्रेणपीतंपिवंतिरुद्रेणघ्रातंजिघ्रंतितस्माब्राह्मणाःश्रद्धांतमनसो
निर्माल्यमेवभक्षयंतीतिप्रत्यक्षतद्विधायकजाबालश्रुतिविरोधेनपराहतमेव
श्रुतिस्मृतिविरोधेतुश्रुतिरेववलीयसी स्मृत्याचारविरोधेतुस्मृतिरेवगरीयसी
तिन्यायात् वहुनाल्पस्यवाधइतिन्यायेनतद्विधायकवहुपुराणवचनेनास्यैकस्य
तद्विरोधिनोवाधोपिन्याय्यः यद्वातांत्रिकार्चितलिंगार्पितं वैदिकैर्नग्राह्यं किंतुवा

लिं॰ चं॰
६७

र्जितानामेव तदुक्तं रुद्रयामलप्रबोधे तत्र प्रतिष्ठितरुद्राक्षयुतोच्छिष्टं नकस्यचित् भोज्यमित्युक्त्वा तेषा
मेव भोज्यं वैदिकस्य तु तस्मान्निषेधविधायकवाक्यानि तांत्रिकनिवेदितपराणि विधाय
कवचनानि वैदिकनिवेदितविषयाणीति व्यवस्था कार्या ननु अदीक्षितानां निर्माल्यभक्ष
णं नरकप्रदमित्यादिवाक्यैर्दीक्षारहितानां वैदिकानामनधिकार इति चेन्न तेषामु
पदीक्षासद्भावात् तदुक्तं स्कांदे अस्ति वैदिकनिष्ठानामपि दीक्षा विमोचनी ददाति
शिवतादात्म्यं क्षिणोति च मलत्रयं अतो दीक्षेति सा प्रोक्ता सैव दीक्षा शब्दार्थवेदिभिः यद्वा
निरतिशयनिर्माल्यनिषेधानां शिवप्रसादान्नमपि भुक्तं तद्भक्तानामेव भोज्यं नाभक्तानामि
ति व्यवस्थापकवचनवाहुल्यात् निषेधवचनमप्येतच्छास्त्रस्य तदभक्तविषयत्वे योजनीयं
तथाह शिवपुराणे निर्माल्यं निर्मलं भुक्तं निर्मलं चापनिंदितं तस्मादभोज्यं निर्माल्यं
शाक्तैरशिवात्मकैः लोभान्न धारयेद्यो भोक्तुं निर्माल्यं च न भक्षयेत् जिह्वाचापल्यतः
क्तः शिवसंस्कारवर्जितः शिवनिर्माल्यभोजी च घोरं वै नरकं व्रजेदिति अत्र शिवसं
स्कारवर्जितानामेवानिवेदितमपि पावनमपि भोज्यमिति निषिध्यते अतः परमपाव
नं शिवनिर्माल्यं तद्भक्तैरेव परिग्राह्यं भोज्यं नान्यैरिति व्यवस्था युज्यत एव अयमा

त्राय

14
गं

दुर्गा
६

थे: शिवसंहितायां व्यासजैमिनिसंवादे व्याख्याते तत्र जैमिनिः अनर्हं मम नैवेद्यं पादांबु

कुसुमं जलं ईश्वरेण कथितमिति केचिन्महर्षयः वदन्ति तत्कथं स्वामिन् यथार्थं क-

थयस्व मे व्यासः देवदेवस्य वचसो विषयोऽयं जैमिने येऽवीरभद्र स्थापिताः शिवभक्ति-

परास्त्वेवाः शंभोरन्यत्र देवेषु ये भक्ता येन दीक्षिताः तेषामनर्हमीशस्य तत्प्रसादश्च

नुचयं तत्रेश्वरवचनमिति मदीयमर्कं निर्माल्यं पादांबु कुसुमं दलं धर्मं मर्थं च का-

मं च मोक्षं च ददते क्रमात् मल्लिंगधारिलोलोके देशिकास्तत्परायणाः मदेकचार-

णास्तेषां योग्यं नैवान्यजनेषु क्वापि केपीश्वरवचनं सम्पूर्णमाप्तविलोमान्मद्भक्तें

पावनं परं मत्वये न्नाक्रमाया तिस्मृत्योश्च ध्ययनादिव अत्र शिवभावनाराहित्येनाशु-

चीनां वेदाध्ययनमितिस्मृत्युक्तं यतः शिवात्मनां शिवभक्तानां मात्ररूपकं न चाशिवात्म-

नामितिव्यवस्थितं तद्विधिनिषेधपराणामुभयवचनानामिति सामान्यमुक्तमिति मंतव्य य-

द्वा भोजनस्य रोगतः आज्ञत्वात् तदेव नियमतिभगवतीश्रुतिः रुद्रभक्तं भुंजीयादि-

स्नादिका तत्र रुद्रनिवेदितसंस्कारवदन्नस्य भोज्यत्वं नान्यस्येत्यवगम्यते तस्य पुनः

सायंप्रातर्द्विजातीनामन्नानं श्रुतिचोदितमितिप्राक्तर्खोन्नानिर्भुंजीनेत्यादौ कालनदे

वै ५

ना

ऽनियमः क्रियते अतो रुद्रनिवेदनसंस्कारवतामेवान्नानां भोजनयोग्यत्वं यथा आधानसं
स्कृतानामेवाग्नीनामुत्तरक्रतुयोग्यत्वं यथा वा अध्ययननियमसंस्कृतानामेवाग्नीनामु
त्तरक्रतुयोग्यत्वं मंत्राणां कर्मविनियोगार्हत्वं ननु पूर्वमुक्तं शार्ङ्गलिंगप्रसादस्यान्नोप
वासं समाचरेत् इत्युपवासनिषेधः शिवरात्र्यादौ च शिवमसवृतं शिवार्चकानामेव
त्रिकालं पूजाविधिनियमश्च क्रियत इति न शंकनीयं तत्र पूजानिवेदितानामन्ना
दीनामन्नादीनामेकीकरणेन स्थापनं कृत्वा परे द्युर्वेतां नैतत्स्वीकारेणाप्रतदविरो
धः यत्रा तत्तत्पूजावसाने तेनान्नं अर्पितमनर्पितं भवतीति न्याये न समर्पितत्वं च । यत्
कर्मणा मनसा वाचा त्रिविधं च समर्पणं नो चेदनर्पितं भुक्तं इति वचनात् शिवपू
जावसरे नैवेद्याद्यसंभवे पिकालांतरे तत्संभवात् यादृशान्नवस्त्रस्य वागादिना ये
नकेनापि समर्प्य भोक्तव्यं अन्यथा प्रसादमेव भोक्तव्यमन्यज्जे मांसवत् समभि
तिवचनोक्तप्रत्यवायः स्यात् एवमकरणे त्वपवाययवा तत्प्रायश्चरणात् ईश्वरनि
वेदितभोजनस्य काम्यत्ववादः परास्तः अत्र रागप्राप्तस्य भोजनस्य रुद्रेण भु
क्तं च पात्रिके प्राप्ते रुद्रभुक्तमेव भुंजीतेत्यन्न रुद्रभुक्तमिति श्रुत्या भोजनं नियम्य

ते अत्र रुद्रभक्तं द्विविधं तदनिवेदितमन्यदेवतानिवेदितं च तथा सूतसंहितायाम्
न्यदेवतानिवेदिते भोजने दोषोऽभिधीयते शंभोर्निर्माल्यकं यस्तु भुंजीयात्सर्वतो
द्विजः अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् इति स्कांदे च प्रसादमन्यदेवस्य
भुंजतां किल्विषं भवेत् शिवस्यैव तु निर्माल्यं ग्राह्यं धार्यं द्विजातिभिः अन्यच्च रुद्र
भक्तं भुंजीयादिति प्रत्यक्षश्रुतिचोदितस्य रुद्रभक्तभोजननियमस्य तदुक्तत्वादे
ति मन्वादिस्मृतिवचनान्युपेक्षणीयानि नहि सा स्वान्ताधिकयाऽवदीर्यमाणैर्येन्दू
नीवचनसंवादापेक्षास्ति बौधायनस्मृतौ शिवाराधनं शिवप्रसादोपसेवनं सां
गमेव विहितं मनुनापि वृथाकृसरसंयावपायसापूपशष्कुलीरित्यादौ देवा
निवेदितानामभोज्यत्वसूचनात् तदुक्तप्रायमेव ततः श्रुत्यादिसकलप्रमाण
सिद्धार्थैर्निरंकुशत्वस्य शिवप्रसादस्वीकारनियमस्य न कुत्रापि पुराहतिरिति मंतव्ये
अन्यच्च रसान्नभक्तस्य जिह्वास्वादमात्रमीतौ म्बर वचनात् भक्तैः सकलैरपि शिव
स्य प्रसादान्नादिकमेव तत् प्रसाद्य भोक्तव्यमिति साधु निरूपितं विद्वन्नापि
नियमप्रपञ्चसंख्यापरस्तीयकमलप्रतिनिधितया निजनयनमेवेश्वराय समर्पितं

लिं॰चं॰ ६९

18

पुनरपि तदीश्वरप्रसादात् तेन तत्त्वं कथं धीयते अतः शिवनिर्माल्यं परिहर्तुं केनापि न शक्य
ते इति सर्वैरपि मंतव्यं अन्यच्च निर्मल्यत्वाच्च निर्माल्यं पत्रं पुष्पं फलं तोयं उपवाससहस्रा
णि तिलयोऽश्वाभागं बन्धुत्ता मं बक लोपमं पादोदकं प्रसादान्नमेव यामोदन्नमो श्रेया
दित्यादि शिवनिर्माल्यस्वीकारेण स्वल्पेनापि मोक्षो भवतीति महाफलं निर्दिश्यते नत्व
यमात्मानं महापातकमाजनं कुर्वंति शिवप्रसादनिर्माल्यपरित्यागिनः पशवो वा एते
ये हि जातिर्ततं न जानंति स्वाद्यानि चादनीयानि दासमार्गं प्रपन्ना ये मृदेकचारणस्तेषा
मित्यादितोऽत्र यर्थवचनं पुंजेयै परमेश्वरं प्रपन्नास्तदेकचारणास्तन्नैकेकर्थ्ये नि ताः

नादेव

देवतांना

न यश्चित्तस्वाभक्तिहीना महापुरुषाराधनव्रतनास्तरण्वशिवप्रसादान्नादिस्वीक
रणोऽधिकारिणो नान्ये भक्तिहीनाः शिवेन खण्डयशति सर्वं शिवमेव आयतनविशे
षेतन्लोभादपि धारणमात्रेण दोषः नऽक्रमनिपुणोऽत्र बाणलिंगे चलेन लोहे सिद्धलिं
गे स्वयंभुवि प्रतिमासु च सर्वासु न दोषो माल्यधारणे निर्माल्यधारणेऽत्यर्थः लोहे
धातुमये तथा स्कांदे अग्राद्यशिवनिर्माल्यं पत्रं पुष्पं फलं जलं शालग्रामस्पर्श
संगात्सर्वं यातिपवित्रतां इति शिवनैवेद्यनिर्णयः अथ वर्णभेदेन पार्थिवलिंग

दुर्गा ६९

रुद्राक्षमाह लैंगे विप्रे गौरास्तु नाम्नश्च बाहुजे पीतवर्णिका वैश्ये कृष्णास्तु माख्याता रक्ता
चरणसंभवे फलभेदेन रुद्राक्ष उक्तः पाद्मे श्वेता लक्ष्मीप्रदा चैव गौरा राज्यप्रदा भवे
त् रक्ता च स्त्रीप्रदा कृष्णा वैरिविनाशिनी पुत्रकामप्रदा पीता नावाञ्छकामोदप
तथा वर्ज्यानि तत्रैवोक्ता श्मशाने मृतभूमौ च नीलिदेशे च यामवेत् रुरवे श्यामपा
र्श्वे च पुष्पकर्मस्थलेपि च नदीपारे वृक्षमूले छायायां च विभीतकी मृत्तिकावर्जयेत् प्राज्ञ
स्तु भुक्त्वायत्न भूमिषु अथ पूजाकालाः प्रातःकाले च मध्याह्ने सायंकाले सदाशिवं पू
जयेद्भक्तिभावेन बिल्वपत्रादिभिर्मुदा ईश्वरसंहितायां प्रातर्मध्याह्नसायाह्नमह
स्त्रिध्वेक्तः क्रमात् प्रातर्विधिकृतं ज्ञेयं मध्याह्ने कामिकं तथा सायाह्ने शान्तिकं ज्ञे
यं रात्रावपि तथैव च कालेनिशीथे प्रोक्तं हि मध्ययामद्वये निशि शिवपूजाविशेषेण
तत्काले च भीष्टदा पूजां षोडशधा प्राहुरन्ये कालविभेदतः मुहूर्तं द्वित्यं तत्रकाल
तत्र शिवं यजेत् षडिंशत्कालभेदेषु केचित् पूजां प्रवदन्ति कालस्तत्र मुहूर्तः स्याद्घजे
त्र निमुहूर्तकं सपदाधिकतां ज्ञेयं सर्वमेतत् तत्सस्त्रायः वायवीयसंहितायां त्रिकालमे
ककालं वा पूजनीयः सदाशिवः शिवरहस्ये प्रदोषपूजायां प्राशस्त्यमुक्तं सायंकाले

लिं०वं०
८०

२०

महादेवः पूजनीयोऽखिलैरपि महापातकयुक्तो वा युक्तो वा सर्वपातकैः मुच्यते पातकैः सर्वैः
प्रदोषे शिवपूजया सर्वेष्वपि प्रदोषेषु हरपूजा विशिष्यते प्रदोषकाले भगवान् महादेवः
सुराधिपः करोति तांडवं देवीमुपवेश्य पश्यमानने तांडवाभिरतं देवं पूजयेत्सर्वेयान
रः प्रदोषपूजाऽकरणे प्रत्यवायश्चोक्तः स्कन्देन सायंकाले महादेवं यो नार्चयति शं
करं स एव सर्वपापानामाश्रयो भवति ध्रुवं सायं त्यक्त्वा शंकरस्य देवदेवस्य पूजनं
यस्तिष्ठत्यापदां प्राप्नोस निष्कृतिर्न संशयः कोऽपि नाराधयति यः सायं देवदेवोत्तमं शि
वं स पिशाचो भवेच्चैव नात्र कार्या विचारणा यदा प्रत्यहं प्रदोषपूजा प्रात्तस्य वशा
न्न क्रियते तदाष्टमी चतुर्दशी पौर्णमासी अमावस्या एकादशीषु विशेषेण पूजा का
र्या तदुक्तं शिवगीतायां अष्टम्यां च चतुर्दश्यां पर्वणोरुभयोरपि भूतिभूषितसर्वां
गायः पूजयन्ति मां निशि कृष्णपक्षे विशेषेण स मे भक्तः स मे प्रियः एकादश्यामुपोष्ये
वयः पूजयन्ति मां निशि सोमवारे विशेषेण स मे भक्तो न नश्यति त्रिकालंनशेखरे
उत्तमं मध्यमं नीचं यजनं तत्पुनस्त्रिधा प्रत्येकं त्रिविधं चेति नवधा कालभेदतः
अष्टम्यामेव यजनमुत्तमोत्तममुच्यते प्रातरामध्यायामेषु प्रत्नस्तु तममध्यमं उत्तमा

दुर्गा
८०

2.1

धमम्मित्युक्तं षट्सु यामेषु पूजनं पंचयामार्चनं ज्ञेयं मध्यमोत्तममागमे प्रातर्मध्याह्नसायाह्ने
निशीथे मध्यमध्यमं प्रातर्मध्यदिने सायं यजनं मध्यमाधमं प्रातःकाले च रात्र्यादौ यजे
नं ह्यधमोत्तमं कनिष्ठमध्यमं ज्ञेयं प्रातःकाले शिवार्चनं यथासंभवकाले स्यादधज
नं त्वधमाधमं इति पूजाकालः अथ शिवप्रकाशकानां मंत्राः प्रदर्श्यंते तत्र संपूर्णो
रुद्राध्यायस्तत्रापि सारभूतो नमः शंभवइत्यादि शिवतरायचेत्यंतो मंत्रः तत्रापि
सारतः पंचाक्षरः ऋतं च सत्यमिति सर्वो वै रुद्र इति विश्वभूतमिति कद्रुद्रायेति प्र
चेतस इति त्र्यंबकमिति यो रुद्र इति सद्योजातादिपंचब्रह्ममंत्राः एतेषामन्यतमेन
शिवार्चनं कुर्यात् तत्रापि पंचाक्षरो मंत्रः सर्वमंत्रांते पठनीयः तदुक्तं शिवरहस्ये
मूलमंत्रस्तु सर्वत्र शिवपंचाक्षरः स्मृतः पठनीयोन्यमंत्रांते मूलमंत्रस्तु सर्वतः मू
लमंत्रोपमंत्रास्ते सर्वे मंत्रा यतः स्मृताः प्रणवस्य प्रासादस्य मुक्तं शिव[illegible]नायां गी
कुर्यात्पुष्पैर्विल्वदलैः पुष्पैर्वा गिरिसंभवैः यो मामर्चयते नित्यं प्रणवेन प्रियो हि
मेः केवलप्रणवेनेत्यर्थः तदुक्तं नागरखंडे पुष्पं फलं समूलं वा पत्रं सलिल
मेव वा यो दद्यात्प्रणवेनैव तत्कोटिगुणितं भवेत् इदं यजिपरं अथ लिंगध

इनविधिः तथालिंगप्रमाणमुक्तं विधेश्वरसंहितायां लिंगप्रमाणं कर्त्तव्यं णादशांगुलमु
च्यते ततोन्यूनंनकर्त्तव्यमधिकंनैवदुष्यति कर्त्तव्यंद्विरंगुलान्न्यूनंसर्वथानैवपूजये
त अंगुष्ठमात्रमानेचपूजा मित्यंग्नि तिकेचन चरेविशेष्यनेसूक्ष्मंस्थावरेस्थूलमे
वहि क्रियासारे नवाष्टसप्तांगुलिकंलिंगंश्रेष्ठमितीच्यते षट्पंचकचतुर्मानंम
ध्यमंत्रिविधंस्मृतं त्रिद्व्येकांगुलमानंयत्त्रिविधंतत्कनीयसं एवंनवविधंप्रोक्तंच
रलिंगंतथाक्रमं शिवरहस्ये कार्यस्त्यष्टांगुलंलिंगं अथवाप्यष्टादशांगुलं द्वात्रिंश
दंगुलंवापिच्छूद्रोधितयामुदा लिंगंषडंगुलान्न्यूनंनकर्त्तव्यंकदाचन ततो
धिकंनकर्त्तव्यंस्वस्वरात्न्यपतेरोधतः इतिपार्थिवमानं अथशैलादिमानं सिद्धांत
शेखरे शैलंस्यान्नवहस्तांतमुत्तमोत्तमकल्पना पृथक्पीठंसपीठंवानालनोधिन
वांगुलात्तु सिद्धयेवधरान्ताधःचरणकादशशस्यते सुस्थानंसप्रदीप्तंचेदधिकस्य
नदूषणं मानोन्मानप्रमाणादिनेषुग्राह्यंनवाबुधैः सान्निध्यकारणंशंभोर्दीप्तिरे
वप्रशस्यते हस्तादधःस्थितंशैलंप्रासादेषुनशस्यते योनिस्थायंभवान्येषांनच
मानप्रमाणता लिंगंस्वायंभवंपूर्वंबाणलिंगमतःपरं योनिस्थंवाविमुक्तंच

भक्तगर्थ्यं च प्रपूजयेत् पंचसप्तप्रकारो भविष्ये वृत्तं वा चतुरस्रं वा त्रिकोणं चाष्टकोण
कं वृत्तं डमरुकाकारं षट्कोणं मंडलाकृति अन्नमं बुद्बुदाकारं मध्यमं कुक्कुटांड
वत् अधमं गोलकाकारं इति लिंगं त्रिधा मतं गृहस्थेच्छाविशेषेण वृत्तं पूज्यं
हि सर्वदा अंगुलादि वितस्त्यंतं लिंगं गेहे प्रपूजयेत् प्रासादे तु तदूर्ध्वं स्यात्पूज
नीयं प्रयत्नतः लिंगमस्तकविस्तारं पूजाभागं समुन्नयेत् नालं तत्त्रिगुणं कु
र्यान्नालवत्पीठविस्तृतं पूजांशाद्द्विगुणं कुर्यादुन्नतं पीठमुत्तमं वृत्तं वा चतुर
स्रं वा मध्ये पीठसमन्वितं द्विगुणं लिंगनाहाच्च कंठनाहं समाचरेत् त्रिमे
खलं मध्यखातोर्ध्वं समं स्याद्वाह्यमेखलं लिंगमस्तकविस्तारं षड्भागं विभजेत्त
तः मेखलामेव भागेन कुर्यात्खातं ततः समं लिंगदैर्घ्यसमं कुर्यात्प्रणालं
पीठवाह्यतः विस्तारं तत्समं मूलेनाग्रे च तदर्द्धकं जलमार्गः प्रकर्त्तव्यस्त
स्य मध्यत्रिभागतः कुर्यात्पीठार्द्धदीर्घं वा प्रणालं च शिवोदितं सर्वेषां रत्नलिं
गानां सपीठानां विशेषतः लोहादीनां च लिंगानामेव लक्षणमाचरेत् अ
स्यार्थः अंगुलादि वितस्त्यंतमुच्चं सपीठं लिंगं गृहे पूजयेत् पूजाभागो लिं

गर्त्तान्तिका नाहंपार निधिः वेष्टनं भित्तियावत् कंठं तु पीठसंकुचितो भागः पीठं ज
लधारीनिश्र शिद्धिः तत्र लिंगमस्तकविस्तारे द्विगुणं लिंगोच्चावि हायपीठमुक्तं
लिंगमस्तकविस्तारत्रिगुणं च लिंगस्थौल्यं पीठं वर्त्तुलाकारं चतुरस्राकारं वावि
स्तृतिश्च तस्माद्वर्त्तुलाकारं चतुरस्राकारं वा लिंगमस्तकविस्तारसमं प्रणाल
दैर्घ्यं मूले विस्तारं च तदर्द्धमग्रे विस्तारं प्रणालमूलाग्रविस्तारयोस्त्रिभागेन
जलमार्गखातं कुर्यादिति सर्वत्र संबंधः कंठस्थौल्यं लिंगस्थौल्यं द्विगुणं लिंगम
स्तकविस्तारषडंशेन पीठाद्योमेखलाचातं च कुर्यादिति निर्गतोर्थः अथ पं
चसूत्रप्रकारो पार्थिवेनास्ति तदुक्तं सनत्कुमारसंहितायां पंचसूत्रप्रमाणं तु
पार्थिवेन विचारयेत् अखंडं तु त्रिकर्त्तव्यं न हि खंडकदाचन द्विखंडं तु प्रकु
र्वाणो नैव पूजाफलं लभेत् रत्नजं हेमजं लिंगं पारदं स्फाटिकं तथा पार्थिवं
पिष्टजं पौष्पमखंडं तु प्रकारयेत् अथ लिंगस्थापनविधिः लिंगस्थापनमुक्तं
काशीखंडे लिंगं यः स्थापयेद्धन्यास्तस्य जन्मकृतादघात् मुच्यते नात्र संदे
हो विमुक्तः सर्वभाग्भवेत् पाद्मे एकस्मिन् स्थापिते लिंगे विधिना स्थापिते

सति तमेवाद्योपराधानांजातं मोक्षंप्रयच्छति ब्रह्मांडे नत्वध्यानितथान्नांभर्यत्तप

नतपोव्रतैः यथात्र्यवेत्सकृल्लिंगे विधिना स्थापिते सति लैंगे नगोजातप्रदाने

नगनखर्णजातदानतः तत्फलंलभतेलिंगेविधिनास्थापितेसति शिवसर्वस्व

भाविष्ये चतुर्वर्णैस्तथाविप्रैः प्रतिष्ठाप्यः सुखार्थिभिः ब्राह्मणैः क्षत्रियैर्वैश्यैः

र्लिंगस्थाप्यजयंततः लिंगगृहीयात्तिर्वापि संस्थाप्यतुयजेत्सदेति यतुस्त्रीणा

मनुपनीतानांशूद्राणांचनरेश्वरस्थापनेनाधिकारोस्तिविष्णोर्वाशंकरस्य

चेति स्कंदवचनं तस्यकागतिरिति चेदुच्यते चतुर्वर्णैरिति पूर्वोक्तवचनाद्विप्रा

दिप्रतिष्ठायां शूद्रस्यविकल्पः लिंगस्थापनेशूद्रस्यनाधिकार इति सिद्धम् स्था

पनकालाः सिद्धांतशेखरे श्रेष्ठोत्तरेप्रतिष्ठास्याप्युनेमुक्तिमीहतां दक्षिणेतु

मुमुक्षूणांमलेमासेनसाध्ययोरिति हेमाद्रौलक्षणसमुच्चये उत्तरायणगते

भानौलिंगस्थापनमुत्तमम् संग्रहे स्थापनेनेष्टनथा वैदक्षिणायने संग्रहे स्था

पितेलिंगेव्याधिनापीड्यते प्रजाः कुमाराः संप्रपीड्यंतेकन्यानाशश्चजायते

लिं०चं०
७२

तस्मात्स्थाप्येल्लिंगं संग्रहे दक्षिणायने यतीनां सर्वकाले च लिंगस्यारोपणं मतं विरुध
मंतरे चैत्रे वा फाल्गुने वापि ज्येष्ठे वा माधवे तथा माघे वा सर्वदेवानां प्रतिष्ठा शुभदा
सिते रिक्तान्यतिथिषु स्यात्सवारे भौमान्यके तथेति तत्रैव आषाढे द्वे तथा मूल
मुत्तरात्रयमेव च ज्येष्ठाश्रवणरोहिण्यः पूर्वाभाद्रपदा तथा हस्तोश्विनी रेवती च
पुष्यो मृगशिरस्तथा अनुराधा तथा स्वाती प्रतिष्ठासु प्रशस्यते नारसिंहे तथा
श्विनो मासो मासश्चोत्तमः सर्वकामदः देवास्तत्र सदा ब्रह्माकल्पां शुनापि प्रतिष्ठिता
भवंति फलदाः पुंसां कर्कस्थे च बृहस्पतौ न तिथिर्न च नक्षत्रं नोपवासोत्र कार
णं मात्स्ये रववाराह नारसिंह त्रिविक्रमाः महिषासुरहंत्र्यश्च स्थाप्या वै दक्षि
णायने क्वचिन्निषेधः आर्द्रादिके स्वातिविरामकाले नक्षत्रवृंदे द्रुहिणाके स्थि
तेर्के विवाहचौलव्रतबंधदीक्षा सुरप्रतिष्ठादि न कार्यमेवेति वसिष्ठः मासे
तपस्ये तपसि प्रतिष्ठा धनायुरारोग्यकरी च कर्तुः चैत्रे महादुःखभयदा च शुक्रे
सुमाधवे पुत्रधनप्रदा स्यात् ऊर्जे च कर्तुर्निधनप्रदा च सौम्ये सपौषेऽरवि
तदुःखदा स्यात् बलक्षपक्षः शुभदः समस्तः सदैव तत्राद्यदिनं विहाय ज्ये

दुर्गा
७२

त्यत्रिभागंपदि हृज्यकृत्स्नेपद्मे पित्रास्तंरवजुपद्मयोश्च रिक्तावमत्यक्ष्दिनेष्वनिंद्ययो
गेषुवेनाश्चिकवर्जितेषु दिनेमहादोषविवर्जितेचशशांककांतानावलसंयुतेपि
प्रथवारसिद्धिः कीर्तिप्रदंद्वेमकरं कुलाग्र भयप्रदंवृद्धिकरंद्वंच लक्ष्मीकरं
सुस्थिरदंत्विनादिवारेषुसंस्थापनमामनंति रत्नमालायां रोहिणिपुनर्वपौष्ण
वैष्णवकरादित्याश्विनीवासवानूराधेवजीवमेषुकथितं विष्णोःप्रतिष्ठापनं
पुष्यश्रुत्यभिजित्सुरेश्वरकयोर्विनाधिपस्कंदयोर्मैत्रेतिग्मरुचेःकरेनिर्ऋ
तिभेदुर्गादिकानांशुभं गणपतिहृढरक्षोयक्षभूतासुराणां प्रथमफणिमस
रस्वत्यादिकानांचपौष्णे श्रवसिसुगतनाम्नोवासवेलोकपानां निगदित
मखिलानांस्थापनंचस्थिरेषु सिंहोदयेदिनकरोमिथुनेमहेशोनाराय
णश्चयुवतौघटभेविधाता देव्योद्विमूर्तिभवनेषुनिवेशनीयाः क्षुद्राश्चरस्थि
रगृहे निखिलाश्चदेवाः केंद्रत्रिकोणभवमूर्तिषु २।४।३।११।१९।५।१२ स्वगृहे
षुचंद्रार्कभौममंदा नित्रिषडायगेषु सान्निध्यमेति नियतंप्रतिमासुदेवैःके

बु

लिं०वं०
७४

28

र्त्तेः शुभार्थसुखसंपद्रोगनाशं अथ देवताघटनकालो दीपिकायां ध्रुवमृदुलघुवर्गे
वारुणे विष्णुदेवमरुदादिति धनिष्ठे शोभने वासरे च त्रि६मदष्टा१०मदन७जेन्मे१
कादशे शीतरश्मौ विबुधकृतिरियं नाडिनक्षत्रहीना नाडिनक्षत्रं त्रयोविंशाति
नमनक्षत्रं अथ प्रयोगः त४भ४त्रलब्ध्या विप्रान्तीः संवंधुर्भैस्काभ्योभूते निवृत्त
नित्यक्रियः श्रुतशीलवृत्तसंपन्नं गृहस्थमाचार्यमृत्विजश्च ताहृत्वान् षोडशा
शैवा चतुरो वा विधिना वृत्वा वस्त्रालंकारादिने भ्यो दद्यात् द्विगुणमाचार्याय
ततस्तूर्यवेदघोषैः सह प्रतिष्ठास्थानं गत्वा प्रासादं ह्वादशहस्तं चतुर्द्वारं प्रागा
रभ्य प्लक्षोदुंबराश्वत्थन्यग्रोधतोरणान्तसहस्राप्य एवं हेमरक्तकुसुमधूम्रमौक्ति
कविचित्रप्रवालश्वेतवर्णध्वजपताकादिभिः पूर्वाद्यष्टदिक्षूपशोभितमंडपं
तन्मध्ये चतुरस्रां पंचहस्तां एकहस्तोच्छ्रितां वेदिं च कारयेत् यथादिक्षु
कुंडानि हस्तमात्राणि चतुरस्राणि सयोनिमेखलानि स्युः आचार्यकुंडमैशा
न्यां सर्ववेहोमसाधनं प्रतिष्ठाप्य मंडपस्योत्तरतो देवस्थापनमंडपंछमहृदा

दुर्गा
७४

काष्ठैः कृत्वाऽभिषेकसाधना निस्थापयित्वा शिल्पिशाल्नातो देवं प्रासादे आदर्शि
एपेनानीय अभ्यासनेत्र विश्य सर्वसंभारान्संभृत्य स्नातः प्राणानायम्य प्रतिष्ठा
प्यदेवतामंत्रेणात्रिविधंन्यासंकृत्वा देशकालौ स्मृत्वा अस्मिंल्लिंगे शिवसान्निध्या
र्थमायुःश्रीसर्वफलावाप्त्यसुखकाम ईश्वरप्रीतिकामोवा लिंगस्य प्रतिष्ठां करि
ष्य इति संकल्प्य गणपतिपूजनं पुण्याहवाचनं मातृकापूजनं नांदीश्राद्धं च
कृत्वा आचार्यम् ऋत्विजो द्वारपालान् ब्रह्माणं सदस्यं च वृत्वा तान्संपूजयेत् म
धुपर्कादिना मंत्रमूर्त्तिर्भवान्नाथ संसारोच्छेदकारक देवाः पूजार्हायथो॥
स्मात्कुरु धर्मोऽज्ञतिं च न संसारभयभीतेन अस्मिंयज्ञे सुभक्तितः प्रारब्धस्त्वत्प्र
सादेन निर्विघ्नं मे भवत्विति आचार्यं प्रार्थ्य द्वारजापकान् ऋत्विजाचार्यास्त
त्तत्कार्ये नियोजयेत् अथाचार्यः प्राणानायम्य मंत्रस्य देवमयो भूत्वा याग
भूमिं प्रासादं स्नानशालां चापोहिष्ठेति कुशोदकेनाभ्युक्ष्य सर्षपान्प्रकी
र्य देवा आयान्तु यातुधाना अपयान्तु विष्णो देवयजनं रक्षस्वेति रक्षां कृत्वा

29

*लिं० चं० ७५* *३०*

घृतिवारं कलशाद्यं सोदकं सपल्लवं स्थाप्य लोकपालानावाह्यार्चयित्वाऽग्निप्रत्यदेवं श्रा
पयेत्। स्वागतं देव देवेशाविश त्वं पनमोऽस्तुते । शुक्लेऽपि त्वदधिष्ठाने शुद्धिं कुर्मः सहस्वतां
ततो देवं शुक्लेन घृतेनाभ्यज्य उद्वर्तनद्रव्येनोद्धृत्य उष्णोदकेन स्नापयित्वा पीठांतरे
वस्थाप्य सुगंधेनानुलिप्य दिव्यधूपेन धूपयित्वा पुष्पैः संपूज्य नवोत्तमवासोभ्यां
वेष्टयित्वा परमान्नेन बलिं दद्यात् । ततो लिंगमर्चां च द्वादशवारं मद्धिरूपकेन
पंचगव्येन पंचामृतेन चास्मै शोध्य गजाश्वारण्यवराहोत्खातवल्मीकसंगमहृ
दराजद्वारं अग्निहोत्रसप्तस्थानादानीतां मृदं कलशोदके निक्षिप्य द्वितीयक
लशे क्षीरवृक्षत्वक्वाथं च तृतीयकलशे व्रीहिनीवारयवादि सप्तधान्यं चतुर्थे गं
धपुष्पाणि इत्थं आपो हि ष्ठा० यो वः शिवतमो रसः तस्मा अरं गमाम व इति च
तसृभिः क्रमेणाभिषिच्य समुद्रज्येष्ठेति सूक्तेन कलशचतुष्टयोदकेनाभिषिच्य
पीठांतरे निवेश्य वस्त्रयुग्मेन आचार्यो देवमभिवेष्ट्य चंदनगंधपुष्पधूपदीपा
यकमहानैवेद्यैः संपूज्य सपात्रस्यं मधु सुवर्णशलाकया गृहीत्वा चित्रं देवाना
मिति मंत्रेण स्वयं पार्श्वे स्थित्वा सत्त्रे स्य घाषमैकैकं नेत्रं समज्योन्मीलयेत् । त

*दुर्गा ७५*

दानकश्चित्पुरतस्तिष्ठेत् अथापद्मेमहृपभोज्यानि दर्शयित्वासुवर्णसूच्याग्रं धेनवालक्षणं
लिंगाकारं ॐ नमो भगवते रुद्राय हिरिण्यपरेतसे परायपरमात्मने विश्वरूपाय उमा
प्रियाय नम इति मंत्रेण संलिख्य यथाशास्त्रं शिल्पिभिः स्फुटं कारयित्वा इदं नेत्रो।
न्मीलनं प्रतिमासु स्वलिंगविषयं नवाणमन्त्रपवर्त्तलिंगेष्विति विशेषः तत्र यजमा
नः सुवर्णशलाकां स्नानवस्त्रादिकं च शिल्पिने दत्वा आचार्याय धेनुं ब्राह्मणेभ्य
श्च यथाशक्ति दक्षिणां दद्यात् ततउत्तिष्ठ ब्रह्मणस्पते इत्युत्थाप्य कनिक्रदत्सू
क्तपाठैः सह मंडपं प्रादक्षिण्येन उत्तरद्वारेण देवं आकृष्णेनेत्यानीय वेद्यां कुश
प्रशस्ते एक त्रिपञ्चसप्तवस्त्रेणाच्छादिते प्राक्शिरसं देवं शाययेत् तच्छिरः प्रदेशेव
स्त्रवेष्टितसपल्लवं कलशं प्राजापत्यायं मुहूर्त्तोस्त्वित्युक्त्वा मंगलद्रव्यैः परिपूर्ण
वेनावस्थाप्य समंताद्भक्ष्यभोज्यानि मंगलद्रव्याणि च संस्थाप्य मध्वाज्यसर्षपति
लपिष्टेनैव माप्यायस्वेति चाक्रकृत्य प्रतिमायां स्थितविलोमसूत्रकं करणे हस्ते
कनिक्रदत् इति मंत्रेण बध्नीयात् ततो देवं पुरस्थादीनि पंचविंशति तत्वानि
निवेशयमनोबुद्धिरहंकारश्चित्तं पृथिव्यप्तेजोवाय्वाकाशाश्च शब्दस्पर्शरूपरसगं

लिं०चं०
७५

धश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थजीवप्राणाः इहैवागत्य सुखं चि
रंतिष्ठंतु स्वाहा ॐ हंसः स्वाहा दिव्यवाससाच्छाद्य देवं सम्यक्पुरुषसू
क्तेन स्तुत्वा पुष्पांजलिं दत्वा गंधपुष्पांजलिभिर्मंडपं वेदिं चाभ्यर्च्य तदुपरि दे
वस्याग्रे चतुरस्रं मंडलं स्वस्तिकलांछितं कृत्वा तन्मध्ये ब्रह्मविष्ण्वीशान्प्रतिदिशं
लोकपालानू तदंतरालेषु अष्टौवसूनेकादशरुद्रान्द्वादशादित्य विश्वेदेवसाध्यना
सत्यमरुद्गणगंधर्वाप्सरसः पितृगणपुण्यतीर्थानि तथा विघ्नेशस्कंददु
र्गाक्षेत्रपालानू यथावकाशमावाह्य तत्तन्नामभिस्तल्लिंगवेदमंत्रैर्वार्चयित्वा
प्रतिष्ठाप्य देवपार्षदेभ्यो नमः इत्यर्चा कार्या श्रोत्रियागारादग्निमानीय स्व
कुंडे स्वगृह्योक्त्या प्रतिष्ठाप्य अन्वाधाय देवस्याग्रे कलशसिद्धार्थयवान् इति मे
कल्पप्रोक्तेनास्थापनांतं कृत्वा तत्र प्रतिष्ठाप्य देवमावाह्य अभ्यर्च्य तत्र्यको
शाकमंत्रेण व्याहृतिभिर्वा पलाशोदुंबराश्वत्थापामार्गसमिदाज्यतिलैर
ष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुयात् तत्राज्यहोमे प्रत्याहुतिसंपा
तं प्रतिकुंडे स्थापितपूर्णकलशेषु निक्षिपेत् ततः श्रीरस्तु रसि पादयो

दुर्गा
७५

32

देवंप्रतिद्रव्यंकृत्वास्वच्छां विष्टकृदादिकृत्वापूर्णाहुतिंकुर्यात् एवंकृत्वेतो
पिस्वस्वकुंडे सुक्रस्यु: पूर्वद्वारादिजापका: पुरुषसूक्तंशांतंरुद्रियंज्येष्ठसामनी
लरुद्रसूक्तंमावर्त्तयेयु: गायत्रीश्रीसूक्तं अन्यच्चापावमानादि अधिवासनमे
करात्रंत्रिरात्रंवाकार्यं तत्रादौविचित्रभूषिस्नानेनरुद्रबलि:कार्य: तत्रमंत्र:
ॐनमोरुद्रायसर्वभूताधिपतयेदीप्तशूलधरायोमादयितायविश्वाधिप
तयेरुद्रायदेवेनमोनम: शिवाग्निहितकर्मचास्तुस्वाहेति भूतबलिंकृत्वाप्रशस्य
परैर्ब्राह्मणै:सहक्षमिष्टान्नं अधिवासनरात्रिसंख्ययाचदक्षिणांदद्यात् अथो
भूतेगर्भगृहेस्थापितपीठिकायांदेव्या:देवस्याभिषेकंकृत्वा महीमूषुमातरं
सुव्रतानामिति देवीमावाहयेत् प्रदितिद्यौरिति स्नात्वाहस्तेरेवामंत्रेणषोडशो
पचारै: संपूज्यतेनैवमंत्रेणपूर्णाहुतिंकृत्वाशान्तइन्द्राग्नीतिसूक्तेनप्रासादं
प्रोक्ष्यदेवंप्रार्थ्यउत्तिष्ठब्रह्मणस्पतेइत्युत्थाप्य तत्रतमेवाभिमुखंकृत्वार
त्वानिश्शब्दरूपपुष्पांजलिंदत्वा पुरुषसूक्तेनस्तुत्वा आकृष्णेनेतिब्रह्मरथे
नगर्भगृहंप्रवेश्यपश्चात्पीठिकागर्भेरत्नादिन्यस्यपूर्वादिदिक्षुइन्द्रादि

नामभिर्नमोन्तैः वज्रमौक्तिकवैदूर्यशंखस्फटिकपुष्परागेंद्रनीलमहानीलशाक
लान्यनुक्रमेण क्षिप्त्वा गोधूममुद्गनीवारव्रीहिसर्षपश्यामाकतिलान् सुवर्ण
रजतताम्रलोहत्रपुसीसकांस्यारकूटधातून् ज्ञानगर्त्ते निक्षिपेत् हरितालो
भ्रककंकुष्ठांजनमाक्षिकारसीसस्वर्णमाक्षिकगैरिकासौराष्ट्रीरोचनामनः
शिलादिनिक्षिप्य वायसेन संलिप्य सौवर्णपद्मं श्वभ्रे निधाय प्रणवेन कृतां
गन्यासः सुलग्ने प्रतिष्ठापितः परमेश्वर इति शलाकामपसारयेत् ततो दे
वंस्तष्ठातनमयो भूत्वा प्रधानपुरुषो यावद्यावच्चंद्रदिवाकरौ तावत्त्वम
नयोशक्त्यायुक्तोऽत्र वास्थिरो भवेति उक्त्वा ध्रुवाद्यौरिति ऋचं जप्त्वा यवं यवा
र्द्धोत्तराश्रितमीशानाश्रितं वा लिंगपिंडिकाश्वभ्रे निधाय स्थिरो भव शाश्व
तो भवेत्युक्त्वा पिंडिकालिंगांतरालं वालुकासीसकादिभिर्दृढं पूरयित्वाप्र
नर्न चालयेत् यजमानेन स्वागतं देवदेवेशामद्भाग्यात्त्वमिहागतः प्राकृत
त्वामदृष्ट्वा नीलबालमद्भक्तवत्सल यावच्चंद्रावनीसूर्यास्तिष्ठंत्यत्राव घाति
नः तावत्त्वयात्र देवेश स्थेयं भक्तानुसेवया भगवन् देवदेवेशात्वं पितासर्वदे

प्राचार्यः पुरुषसूक्तेन उपतिष्ठेत्

हिनं त्वयाव्याप्तमिदं सर्वं जगत्स्थावरजंगमं त्वमिंद्रः पावकश्चैव यमो निर्ऋतिरेव च वरुणो मारु
तः सोमो ईशानः त्वमुरव्ययः येन रूपेण भगवंस्त्वयाव्याप्तं चराचरं तेन रूपेण चागत्य।
स्थिरो भव जगद्गुरो सकलत्रस्त्वाद्वारंसाश्वयद्धइ त्रिपुष्पांजलिं दद्यात् आचार्यस्त्व चादि
दत्वोशांतिकलशोदकेन पंचामृतेनाभिषिच्य पुष्पकुशाग्रत्तोदकेन स्नापयित्वा पुन
स्तल्लिंगमंत्रेण संपूज्य पादनाभ त्रिरस्तु देवस्यहा इहैव नंदिमहाकालभंगरीटि
स्कंदो मगविनायकं विष्णुवृत्तजयंतं द्वाग्नियमनिर्ऋति वरुणो वायुसोमेशानारसुरो
गणगंधर्वगुह्यकविद्याधराद्रिपरिवारदेवताः संपूजयेत् लोकानुग्रहहेत्वर्थं।
स्थिरो भव सुखो सने सान्निध्यं हि सदा देव प्रत्यहं परिवर्जय माभूत्पूजा विरामो
स्मिन्यजमानः समद्धजनां संपालयेसनां राष्ट्रं सर्वोपद्रववर्जितं क्षेमेणवृद्धिमतुलां।
सुखमद्वयमश्नुतामिति संप्रार्थयेत् ततो यजमानः देवप्रतिष्ठासिद्धयर्थं वस्त्रालं
काराद्दिगोभूहिरण्यमाचार्याय दत्वो तंप्रार्थयेत् भगवन्सर्वधर्मज्ञ शिवधर्मप
रायण मोचितो स्तत्वयानाथ दुस्थेदाद्भववंधनात् ज्ञानतोज्ञानतो वापि भगवन्
यत्कृतं मया तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादाद्द्विजोत्तमेति तद्दक्षिम त्विजः तद्दर्जापके

लिं०चं०
७८

म्यः तदर्द्धं सदस्येभ्यो यथाविभवं ब्राह्मणभोजनं एवं माघचतुर्थ्यादि प्रथमे देवस्य मधुना द्विती
ये हरिद्रापिष्टेन तृतीये सश्रीखंडयवपिष्टेन लेपनं स्नानं च चतुर्थे तु मनःशिलाप्रियं
गुपिष्टेनोद्वर्त्य अशोकतरुपत्रशतक्रतुबीजसदर्भौलदर्भसरवैः मल्लीरवृन्तत्वक्चूतपल्ल
वदूर्वायवसिद्धार्थादिमंगलद्रव्यतीर्थोदकैर्गंगादिनदीवापीसरवृत्तस्नानैर्महाभि
षेकं कुर्यः सर्वं जलक्रीडाद्य प्रतिष्ठोपकरणमाचार्यस्य तत्र सद्यः पंचदेवद्रुमाणां मधु
कुंकुमादिसर्वद्रव्यैस्ताडितरावदेवं लेपयेत् तत्र तस्मिन्नेव दिने दिनांतरे वा लिंगप्र
तिष्ठां गतनयाचंडप्रतिष्ठां कारिष्यकृतिसंकल्पप्रासादाद्बहिः गर्भगृहाधस्तात्रान
रात्नेईशान्यां चंडस्थाने चंडमूर्तिं संस्थाप्य पूजयेत् तथा लिंगपुरतो वृषभं संस्थाप्य पू
जयेत् यावत्तिष्ठति लोकेस्मिन्देवदेवो महेश्वरः तावत्कालं त्वया देवस्थातव्यं शिवसं
न्निधौ विज्ञापयेत् अथ जीर्णोद्धारविधिः आग्नेयपुराणे जीर्णादीनां च लिंगानां
मुद्धारविधिमाचरेत् लक्ष्मोज्झितं च भग्नं च स्थूलं वज्राहतं तथा संपुटं स्फुटितं
व्यंगं लिंगमित्येवमादिकं इत्यादि दुष्टलिंगानां त्याज्यपिंडी तथा वृषः लक्ष्मोज्झि
तं वाणोदि भ्रमेणातद्विधिनास्थापितं तल्लक्षणरहितमित्यर्थः भग्नं अनेकशकली

36

दुर्गा
७८

भ्रष्टं स्थूलं पिंडिकाननुरूपं वक्रलं विद्युद्धतं संपुटं न्युब्जं स्फुटितं एकदेशभग्नं व्यंगपिंडिकाप्रमा
णात्पारहितं आदिपदेन चांडालस्पृष्टादीनां ग्रहणं पिंडीदृषद्योरैक्यत्वेन योरेव त्यागो न लिंगस्य
चालितं चलितं निम्नमन्यपूर्वं विषमास्थितं दिङ्मूढं पतितं तथा एवंविधं च संस्थाप्य नि
र्व्रणं च भवेद्यदि नाद्येन प्रवाहेण तदपाक्रियते यदि ततोऽन्यत्रापि संस्थाप्यं विधिदृष्टे
न कर्मणेति निम्नं समान भूभागान्निम्नायां भुव्यवस्थितं विषमस्थितं यत्र पूजादिकर्त्ते
न शक्यते तस्मिन्देशे व्यवस्थितं दिङ्मूढं विशेषविद्भावेऽपि उदगेति रिक्तादिव्युत्पा
लीकं पातितं गर्त्तादौ मध्यस्थं संपूर्णपिंडिकाभ्रमान्तर्गतं प्रासादमध्यभागे स्थित
मित्यपि केचित् एवंविधमित्यनेन लक्ष्मोज्झितभग्नस्फुटितविद्युद्धतातिरिक्तानां ग्रह
णं तेन जघन्यो निर्व्रणशब्दोऽपि लक्ष्मोज्झिताद्यतिरिक्तानामेवोपलक्षकः पिंडश्चे
चालितं लिंगं निर्दोषं च भवेद्यदि ततो वै स्थापयेत्तत्र जपेद्दत्तं महाघोरकं त्यजेत्सदो
षितं लिंगं श्वपचाद्यैश्च सेवितं लिंगानुरूपप्रतिष्ठाप्य विशुद्धिमधिगच्छतीति सिद्धांत
शेखरोक्तेः तत्रैव लिंगादीनां च जीर्णानां प्रोच्यते विधिरुच्छ्रितो सर्वारिष्टविनाशा
र्थं सर्वप्राणिहितार्थकः लिंगस्य पिंडिकायाश्च वृत्तिमात्मरवल्लिंगयोः सर्वेषांपरिवा

लिं०चं०
३८

38

रागां हर्म्यप्राकारयोस्तथा उद्धारश्चावृत्तिः प्रोक्तोऽयोद्धारे हेतुरुच्यते आवृत्तिः पुनः संस्कारः स्फु
टिते खंडिते दग्धे वाशनिनाग्निना उन्मत्तैः शत्रुभिश्चौरैः करिणाश्वेन सा हते लिंगपीठा
दिके वाप्यथ भग्नेऽपि विशीर्णे कालपर्ययात् देहजीर्णत्वयथा देहीत्यक्त्वान्यदुपगच्छति लिंगा
दीन्यतिजीर्णानि तथा मंत्रं चैति देवता: खंडितं स्फुटितं लिंगं प्रेतादीनाश्रयंति च लिंगादौ
सत्वभग्नत्वात्तथा च ब्रह्मराक्षसा: कर्तुर्नैपात्यंताराष्ट्रस्य तद्ग्रामस्य विशेषत: पीडां कुर्वंति
ते क्षुद्रां दुर्भिक्षमरणादिकं तस्मात्सर्वप्रयत्नेन कुर्याद्धुद्धरणक्रियां स्वायंभुवे च दैवे च
बाणलिंगे तथैव च ऋषिभिश्चासुरैर्देवैस्तत्वविद्भिः प्रतिष्ठिते लिंगे जीर्णादिदुष्टेपि नो
द्धारं तत्र कारयेत् इदमपि स्वायंभुवादिव्यक्तिविषयं तत्तद्देवात्तद्व्यक्तिनाशेन तत्स्थान
स्यापि तेषां तीर्थत्वनाशाद्व्यक्तिविषयं स्वायंभुवादिलिंगानां जीर्णपीठं परित्यजेत् उ
क्तैर्जीर्णादिभिर्दुष्टं मानुषं तु परित्यजेत् दिव्यं पतितं स्थानान्तरध्वस्तं स्रोतसा हृतं चौरा
द्यैश्चालितं लिंगं स्थापयेन्निर्व्रणं पुनः लोहादिबद्धं तद्भिन्नं भिन्नांगं संधाय स्थापयेत्पुनः
सुवर्णाद्यष्टलोहनिर्मितं लिंगं देवाङ्गं तत्तद्देवसहितं कृत्वा पुनः स्थापयेदित्यर्थः वाक्यपा
दविशेषहीनां कर्णनासास्य हीनकां नाहृत्वीयपरिवारागां प्रतिमां परिवर्जयेत् यद्वा प
त्रमाणं च लिंगं वा प्रतिमापि वा नाहृत्रैव मानेन तद्द्वयेरणं प्रकल्पयेत् कारयेत्तां प्रमा

दुर्गा
३८

नेन नान्यद्रव्येण तत्पुनः नान्याकारं च नान्यत्र स्थापयेत्तदुक्तं नमः सोन स्थापयेल्लिंगे ग्रामादेवान्य
न्यतः तत्समीपगते देशे स्थापयेद्वा ध्वजिते प्रासादे पतिते हर्म्ये गोपुरे मंडपादिके तदाकारं
चद्रव्येसु वात्मानं तत्र कारयेत् कर्मयोग्या शिला यत्र प्रासादे दृष्टकाश्च तथाविधाः हीनद्रव्यकृतं हर्म्ये
श्रेष्ठे द्रव्यैः समाचरेत् हीनं वाप्यधिकं मानं प्राकारं वा न कारयेत् एवमुक्तेन मार्गेण प्रासादेषु रु
क्के विचार्य्यैव लिंगपीठादिकं जीर्णं तदुद्धारं न चाचरेत् तिथिनक्षत्रवारादि तदर्थं न विचा
रयेत् जीर्णं चोद्धरयेद्विद्वान् चीर्णं नैव तु चालयेत् जीर्णस्याधारणे दोषः अजीर्णं चलनेन तथा
तस्मात्तु धारयेज्जीर्णमजीर्णं रक्षयेद्बुधः सुस्थितं नास्थितं वापि शिवलिंगं न चालयेत् शतेन
स्थापनं कुर्यात्सहस्रेण तु चालनं अस्य श्लोकस्य व्याख्याविवरणे प्रस्थापनबोधे नित्यपू
जादिभूर्ययुक्तं जीर्णोद्यमपि सुस्थितं हीनं पूजादिभिर्लिंगमजीर्णमपि दुःस्थितं देवतास्थापि
तं लिंगं मोहाल्लिंगस्य चमागतं तल्लिंगं दुःस्थितं वापि तं ज्ञेयमिति निश्चितं सहस्राद्दिकहोमेन
तस्य चालनमीरितं स्थापनं शतहोमेन तस्य लिंगस्य लोपितं एवं बहुविधेस्मिन् शैवे दीक्षास्य व
रुद्रोदिताः परीक्ष्य बहुधा तांश्च जीर्णलिंगं समुद्धरेत् हयशीर्षागमेपि जीर्णोद्धारवि
धिं कृत्स्नं संक्षेपात्प्रब्रवीमि ते चालितो ष्यापितो भूमिः केनचित्स्थापकमेण चंडालान्य

लिं० चं०
८०

जसंस्पर्शादूषिता वन्हिना चया सद्भ्रमणपतिता जीर्णा नदीवेगादिपातिता अपुण्यजलसंस्पर्शाद्विविध
नजदूषिता पतिता घर्षिता श्लेष्मविण्मूत्रादिविदूषिता निर्दूषणालक्षणोपेता संस्कार्या देशि
केन तु भूमिर्लिंगमीश्वर प्रतिमा च चंडालपतितस्पर्शा अस्पृश्योग्निषिद्धस्पर्शः जीर्णा
कालवाकृत्स्नेन अग्न्यादिसंबंधेनैव विशीर्णा सद्भ्रमणएकदेशेभग्ना देशिक उपासकः पू
र्वोक्तेन विधानेन वैदिकेन तु रोत्तम अचलां दूषितामेव स्थापयेद्विधिनोत्तमां पूर्वोक्ते
नाचला च प्रतिष्ठाप्रकारेण एवंविधिना वक्ष्यमाणप्रकारेणोत्सृज्यतामित्यर्थः अतिजी
र्णां तथा व्यंगां दारवीं चोलजामपि परित्यज्य न्यसेदन्यां पूर्वोक्तविधिना गुरुः संहारविधि
नात्र मंत्रान्संहृत्य देशिकः सहस्रं नारसिंहेन हुत्वा नाम प्रवरेद्गुरुः संहारविधिना प्रातिलो
म्येन मंत्रा उक्ताः संहृत्य उद्धृत्य नारसिंहेन नृसिंहमंत्रेण सोमद्ध्येया ज्यमन्यानादेशात्तु
वृषसंयोजयित्वा तु मंत्रेणावाह्य देशिकः दारवीं दाहयेद्वन्हौ शैलजां च क्षिपेज्जले धातुजां
रत्नजां वापि प्रक्षिपेन्नाकरस्तु ये अगाधे चान्यतोप्येवं क्षिपेन्न दोषो महाजले वृषं वृषोवार
ज्वा संयोज्य मंत्रेण या यायोज्यते नाह्या ह्रयेदिति त्रिविक्रमः यानमारोप्य जीर्णार्चा छत्रध्व
वस्त्रादिना गुरुः शंखदुंदुभिनिर्घोषैर्गीतवादित्रनिःस्वनैः नीत्वा गाधं जलं रम्यं मार्गेरा

५०

दुर्गा
८०

ध्यामध्यास्ते वै विष्वक्सेनाय वीर्यरूपदित्युपेतां ततो गुरुः यानमारोप्य तानि पूर्वोक्त एव प्रतिपादन इ
तिकर्त्तव्यतोऽत्यर्थं विष्वक्सेनोद्देशेन वीर्येण वीजेन गुरुर्भागीरथ्यादिजले तां प्रतिमां क्षिपेदि
त्यर्थः रत्नानि क्षिप्तान्यादाय स्वयं दद्यात् दक्षिणां धेनवो दश वा पंच स्वर्णवस्त्राद्यलंकृताः जी
र्णोद्धारे प्रदातव्या गुरवे देवतुष्टये त्तिगाननिक्षिप्तानि रत्नान्यादाय स्वयं यजमानो दशधेनूः
पंच वा हेमवस्त्राद्यलंकृता गुरवे दक्षिणां दद्यादित्यर्थः भोजनीया विष्णुभक्ता देयमन्न
मथादिने त्रिरात्रमुत्सवः कार्यः पंच सप्तत्र्यथापि वा बलिश्च विधिना देयो यथोक्तेन तु रो
त्तम यथोक्तेनाचलार्चाप्रतिष्ठाप्रकारेण ततो निवेदयेदन्यां प्रतिमां लक्षणान्वितां नि
वेद्य स्थापयेत् तल्लक्षणं देवराजेंद्र नष्टदोषस्वरूपं तु ये संपत्ति वी विपत्ति वा नोपेक्षां तत्र का
रयेत् अथास्यापिंडिकां पूर्वमन्यां तत्र निवेशयेत् यद्द्रव्या यत्प्रमाणा च या मूर्तिश्चोद्धृता हरेः
तद्द्रव्या तत्प्रमाणा च सा मूर्तिस्तत्र कीर्तिता यत्प्रमाणं यदाकारं यत्र यद्दिग्गमुद्धरेत् तत्प्र
माणं तदाकारं तन्मानं तत्र विन्यसेत् विहाय पिंडिकां पूर्वां तद्दिने वापरां न्यसेत् द्विती
ये वा तृतीये वा दिवसे स्थापयेद्गुरुं अत ऊर्ध्वं भवेद्दोषो विधिनापि निवेशिते अनेनैव वि
धानेन लेप्यादिषु विवर्जयेत् लेप्यादी कुमलिखिताः प्रतिष्ठापिताः प्रतिमाः अन्यद्व

लिं०चं०
८१

42

कल्पयेत्तत्र तत्र मारणं तदा श्रुतिः राघवसंदेहे पत्तः प्रोक्तो जीर्णोद्धारविधिस्तत्र फलं दृष्टव्यं न स्यान्तत्तु ना
न्यत्र संशयः वापीकूपतडागानां सुरधाम्नां सदा नघ प्रतिमानां सभानां च संस्कर्त्ता यो न रोम
वि पुण्यं ज्ञातव्यं तेन स्यमवेत्तम्लान्न संशयः संज्ञायो त्र न कर्त्तव्यो जीर्णसंस्कारकर्मणा मूला
दृष्टव्यं रोधान्तं पुण्यं कूपे प्रतिष्ठितं प्रतिष्ठितमिति भावेक्तः प्रतिमायां ज्ञातव्यं कूपादेः परि
कीर्तितं प्रतिमादेर्ज्ञातव्यं तां जीर्णसंस्कारणादुर्वेत्त कूपप्रतिमयोर्दृष्टव्यं तज्ज्ञातव्यं योरन्य
त्वमहत्वापेत्तया व्यवस्था यत्तु कर्मत्रिपुरार्णे सुस्थितं दुःस्थितं वापि शिवलिंगं न चालये
त् शतेन स्थापनं कुर्यात्सहस्रेण तु चालनं पूजादिभिश्च संयुक्तं जीर्णाद्यमपि सुस्थितं
पूजया रहितं यत्तु तद्दूष्ममपि दुःस्थितं अयं च चालननिषेधो विधिव्यतिरेकेण यदपि
तत्रैव असुरैर्मुनिभिर्देवैस्तत्वविद्भिः प्रतिष्ठितं नत्तु देवाद्यभक्तिनाद्धोनतत्स्थानस्थापि
तदानीनननाद्दृश्यव्यक्तिविषयं जीर्णोद्धारप्रकारोप्यत्रैव यास्यमंडपमीशेवाप्रत्यग्ग्रहा
देकतोरणं विधाय द्वारपूजादिस्थंडिलेसंप्रपूजनं द्वारपूजादिशिवकुंभपूजांतमिति
त्रिविक्रमः मंत्रान्संपूज्य वास्तुदेवांश्च पूर्ववत् दिग्बलिं च बहिर्दत्वा समाचम्य स्वयं गुरुः
ब्राह्मणान्भोजयित्वा तु शंभुं विज्ञापयेत्ततः दुष्टलिंगमिदं शंभोः शांतिरुद्धरणे स्य चेत्

दुर्गा
८१

ढ्चित्सवादेनविधिनाऽऽधितिष्ठ चमांशिव एवंविज्ञाप्यदेवेशं शांतिहोमं समाचरेत् मध्वाज्य
क्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतं ततो लिंगं च संस्थाप्य पूजयेत्स्थंडिले तथा लिंगं लिंगाधि
ष्ठितदेवतां स्थंडिले संस्थाप्येत्यर्थः ॐ व्यापकेश्वरायेति नाम्ना नेतृ शिवार्चनं ॐ व्यापकेश्वर
हृदयाय नमः ॐ व्यापकेश्वर शिरसे नमः ॐ व्यापकेश्वर शिखायै नमः इत्यंगमंत्राः तत्र
तत्राश्रितं मंत्रं धारयेदस्त्रवंधतः सत्वः कोपीह यः कश्चिल्लिंगमाश्रित्य तिष्ठति लिंगं त्यक्त्वा
शिवार्चाभिर्यत्रेष्टं तत्र गच्छतु विद्याविद्येश्वरैः सार्धं भूत्वा मम रत्नभविष्यति सहस्रप्रतिभागं च
ततः पाशुपतास्त्रेण कृत्वा शांतिं पुनाप्रोक्ष्य [illegible] जलं ततः ब्रह्मशिलापिंडीलिंगात्म
कदेवताभागत्रयसंस्कारार्थं पाशुपतास्त्रेण कृत्वा शांतिकलशोदकेन देवं संप्रोक्ष्य कुशैः
स्पृष्ट्वा होमसंख्यया पाशुपतमंत्रं जपेत् दत्वार्घं च विलोमेन तत्त्वतत्त्वाधिपांस्ततः मू
र्तिमूर्तीश्वरांल्लिंगे पिंडिकां संस्थितान् गुरुः विसृज्य स्वर्णपात्रे तद्वृषस्कंदस्थयानपात्र रज्जौ
बध्वा तयानीत्वा शिवमंत्रं गणेन तु शनैः तज्जले निःक्षिपन्मंत्री पुष्पसर्पिर्जुहुयाच्छतं तत्र
येदिक्पतीनां च वास्तु [illegible] शांतं शांतं रक्षां विधाय तत्राग्निमहापाशुपतास्त्रतः लिंगमन्यं
ततस्तत्र स्थापयेद्विधिवद्गुरुः विलोमेन पराङ्मुख संज्ञकं नेव तत्त्वाधिपमूर्तिमूर्तीश्वराव

दंते सिद्धं ततो स्वरे जीर्णोद्धारविधिं वक्ष्ये समासात्तत्र चोदितः ईशान्यां दक्षिणे वापि मंडपं प-
श्चिमामुखं कुर्वीत पूर्ववत्सर्वं रक्षां स्यैव कृतोरगं पूर्ववत्सर्वं कं भादिक्षारपालार्चनं कुर्यात्स्वयं
ते मनो शिवार्चनं द्वारपालार्चनं मंडप प्रतिष्ठा प्रकारेण मंत्राणां न्यसनं कुर्याद्वास्तुदेवार्चनं
तथा मंत्राणां देवस्थापित कल्पानां अनर्वहिर्वा निदध्याच्छिवमंत्रांश्च भोजयेत् शिवमंत्रा
न्यं चेति त्रि विक्रमः छिन्नाङ्कमेकना दीक्ष तमो विज्ञाप्येच्छिवं दोषे लिंगमिदं दुष्टं त्वां निर
स्तस्य चोद्धृतो भवति निवर्तनेन प्रोक्तं प्रोक्तं तद्भावयेद्गुरुः तेन शिवेन प्रोक्तं शांतिर्भवति
तिवचो गुरुर्भावयेत् विज्ञाप्येवं शिवं भक्त्या शांति होमं समाचरेत् मधुनाज्येन दुग्धेन दूर्वा
भिर्मूलमंत्रतः शतमष्टाधिकं मंत्रं प्रत्येकं जुहुयात्ततः मंत्रं मूलमेवं मध्वाद्यैस्तर्पयेत् त्रिमधु
मधुरैः सार्द्रसमिधो घारमंत्रतः शांतमर्थं वर्त्तुले कुंडे सहस्रं जुहुयाद्गुरुः अथवा स्वेन जुहु
याद्वाहतिभिश्च पूर्णया बध्नीयात्कंकणं हैमे लिंगस्योत्थानके करे लिंगस्योत्थानकं करं
भावयित्वा तत्र हेमकंकणं बध्नीयादितस्थितं लिंगं संस्थाप्य संपूज्य पूर्वोक्तविधिना ततः
सांगं संपूजयेद्धृत्वा स्थंडिले व्यापके श्वरं लिंगाच्छिन्नानि भूतानि तांडवे दश मंत्रतः या
निकानि च भूतानि व्रजंतु स्थान मीप्सितं विद्या विद्येश्वरैर्युक्तः शिवो लिंगे भविष्यति इति

45

दत्वा शिवस्याज्ञां ततो भागत्रयं गुरुः कृत्वा कृत्वा स्वमंत्रेण तथा पाशुपतेन च ततः प्रतिभागं सहस्रं
चास्त्रेण [illegible] निघंटोदकैः ब्रह्मशिलापिंडिकालिंगात्मके देवभागत्रयं संकर्तुः त्रिसहस्रमंत्रे
ण कृत्वा तेनैव प्रतिभागं कलशसहस्रेणाभिषिंचेदित्यर्थः मूलमध्याग्रकैर्दर्भैः स्पृष्ट्वा चैव
पमाचरेत् ब्रह्मशिलामूलेन पिंडीमध्येन लिंगमग्रेण दर्भैः स्पृष्ट्वेत्यर्थः प्राक्तन्या पाशुपता
स्त्रं वज्रपंजरमस्य संख्यया सद्योजातादिवक्त्रेषु दद्याद्दर्भपरांमुखं दुष्टलिंगप्रतिपत्ति
मोह सौधम्मृन्मयो परित्याज्य दारुजं वाग्निना दहेत् सौधं सुधानिर्मितं लिंगं लोहजं तेन का
र्यस्याच्छैलजं वाप्सु निक्षिपेत् सुवर्णाद्युत्लोहनिर्मितं भग्नं च तेनैव सुवर्णादिना तत्का
र्यमित्यर्थः तत्तत्तत्वेश्वरान् लिंगान्मूर्तिमूर्तीश्वरानपि लिंगस्थान्विसृजेन्मंत्री पीठव
स्त्रशिलागतान् वृषस्थान्विसृजेत्तद्वद्गमूर्तिस्थितानपि ततः सुवर्णपात्रे नरत्नानि गोच
र्मजातेषा वृषस्कंधस्य यावत् लिंगपीठं च चर्मेण शिवमास्थित तत्र [illegible] सद्रत्नोप्या
हरेद्गुरुः उपचारार्थं च लिंगस्य तेनो वृषे प्रेरयेत्ततः वह्निं नीत्वा ततो लिंगपीठं ब्रह्मशिलाहृ
त्य रथ्यादिके समारोप्य समुद्रे निःक्षिपेत्ततः स्थूललिंगोद्धृतौ वध्वा गजं वा प्रेषयेद्गुरुः
सौधं मृन्मयो परित्यज्य दारुजं वाग्निना दहेत् सर्वं च निक्षिपेत्तोये लिंगं वा प्रतिमादिकं

लिं॰चं॰
८३

46

ततः पाशुपतास्त्रेण ह्रां स्वर्यं तु कुर्यात्ज्छत्नं लोकपालानामुभ सह वास्तुह्रांसैह्रांतेशानं प्रतिदैवतं ह्रातं
जुहुयादित्यर्थः रक्षां कुर्यात्तत्कर्मैव महापाशुपतास्त्रेणा तस्मात्तत्स्थाने यल्लिंगं तत्र संस्थापयेत् त्व
नः प्रतिष्ठोक्तमार्गेण सर्वकर्म समाचरेत् सर्वस्य परिवारगणप्रकारादेः समुद्धृतो सर्वेषा
मपि जीर्णानामेष एव विधिः स्मृतः कर्त्ताचेदिति गणादयश्च कुंभादिभ्यो यथोदितो यत्नेन स्थाप
नेप्रोक्तं तत्फलं मे तदुद्धृतो अथ यमत्रानिर्गलितोर्थः लक्षोज्झित स्फुटित विशीर्णस्वपचस्प
वित्तानां लिंगानां तादृशीनां वा हृत्पादशिरः कर्णनासास्य हीनानां प्रतिमानां वा विधुक्तप्र
कारेण चालनं जलादेः प्रतिपादनं च कृत्वा तेन प्रकारेण तस्मिन्नेव स्थाने पूर्वसजातीयद्र
व्यनिर्मितं तन्मानं तदाकारं लिंगं तादृशीं प्रतिमां च स्थापयेत् अतिजीर्णमिति पूर्वोक्ताद्व
यशीर्षवाक्यात् पीठाच्चचालितं लिंगमिति त्यजेत्सदोषितं लिंगमिति वृषभपदशिरोही
नमिति यदुक्तं यत्प्रमाणं चेति सिद्धान्तशेखरोक्तेः अस्मात् एव वाक्यनिचयात् प्रतिपत्तिप्रयो
जकदोषाभावपूर्वकत्वं तुनिर्मल विषयस्य दिशां नानां च वेधचालनं तेषामेव पुनः स्था
पनं च भग्नचूर्णितयोः तदवयवानां प्रतिपादनपूर्वकं नूतनानां स्थापनं अनेकशाक
लत्वेन चूर्णितत्वेन चोद्धारपुनःस्थापनविध्योरप्रवृत्तेः चालितचलितपातितमध्यस्था

दुर्गा
८३

नांगनेोद्धारोनचत्यागः किंतुतेषामेवपुनःस्थापनं उद्धृतस्योद्धाराऽसंभवात् निर्दुष्टत्वेन प्रतिप
त्तिवद्ग्रहणेष्वेतेनैवनदीवेगापहृतोन्मत्तचौरैरहस्याद्यपहृतानांलानांमेलानांमेलान्ये
षनान्येवपुनःस्थाप्यानितेषामलाभेतु तादृशान्यन्यानिस्थाप्यानि निषिद्धस्पर्शदूषितानि
षिद्धजलस्पर्शविप्रकृतजदूषितपतितनाद्युच्चर्चितस्पृष्टमविण्मूत्रादिदूषितानांस्वस्थानस्थि
तानामेवपुनःसंस्कारोनोद्धारेण नापिप्रतिपत्तिः अग्निजीर्णमिति पाठश्चालितमितिन्ये
जैत्यदोषितंलिंगमिति पूर्वोक्ताद्वाक्यनिचयात् अनुद्धृतानामेवतत्रैवसंस्कारसंभवा
त्स्यलानांतरनयनविधिर्नामान्त्र एतेनस्वस्थानाद्वचलितस्याविष्कृतस्यचविद्युद्धतदग्धा
देरप्येवमेववा वस्थास्थानाच्चलितस्यप्रतिष्ठा च स्थूलेपर्वपिंडादौ लिंगे स्युद्धारः प्रतिपत्ति लां
विधानात् पिंडिकांतरादिनिवेशोऽस्तु व्यंगेनपूर्वपिंडिकादिनिवेशेऽस्तु व्यंगेनपूर्वपिंडि
कादीनांभग्नेऽपि वपिंडिकाद्यभावेनपिंडिकाद्यंतरस्थापनमात्रमित्यादिदुष्टलिंगाना
मित्यग्निपुराणे चरणावाक्याच्छिन्नेपीठादिकेवापीतिसिद्धांतशेखरवाक्यात् पूर्वपीठं परि
त्यजेदितिहयशीर्षवाक्याच्च सुवर्णादिनिर्मितभंगादौतुतेनैवसुवर्णादिनानानादृशानादृ
शानावत्परिमाणंचलिंगादिकृत्वातत्रैवपुनःस्थाप्यं यदितेनसुवर्णादिनानानादृशांक

लिं०चं० ८४

ॐ नत्राकान्ते नष्टसमुद्रे पिहितिपेत् रत्नजातं स्मरन्दुरेव देवनवा रत्नजायदिद्गधा पितृकांतिं न
ज्ञेयाति नदासे वस्याप्येति शिवलिकसः लोगयोग्य निभ्रन्नागमिति सिद्धांतशेखरवाक्यात्
धातुजं रत्नजं वा पीतिह्य पीठं वा कार्य्यं इति जीर्णोद्धारविधिः अथ पाशुपतयोगः
यजमानः उपाय्यादक्षिणे स्वामी नगास्वा बायाश्रिमध्ये केनो रंगमंडपं नन्म श्यमागे वेदिं
पूर्वभागे वर्तुलं चतुरस्रं वा कुंडं स्थंडिलं वा पश्चिमे वा रुपीठमेतरे वास्तु कया स्थंडिलं
चक्रं त्वा कालादि स्मृत्वा मौलफलाद्यैः गणपतिकामः खल्वप्रतिमायां न दत्वा गणफ
लकामो वाजी रमादिदोषदुष्टलिंगस्य प्रतिमाया उत्थापनं वा करिष्ये इति संकल्प
येत् पिंडिकायां विगतदृष्टालांदकल्तशेषु ईश्वरप्रीतिकामः इति विशेषः सर्वत्रेश्वरप्रीति
का मनोगणेशपूजा स्वस्तिवाचन मातृपूजा नांदीश्राद्धं ब्राह्मणानिमंत्रणं कृत्वा ऋत्विजो
मधुपर्केण ल्वाचार्यसदस्यान् वा त्रिरात्रेऽष्टौ चतुरो वा ऋत्विजो द्वारपालान् ब्रह्मणो
चतुरो वा वृत्वा वस्त्रालंकारमधुपर्कादिभिस्तान्पूजयेत् अथाचार्यो मंडलपूजादि
शिवकुंभपूजांतं कृत्वा वास्तुमंडले मध्ये वेद्यां च देवतास्थापनं कृत्वा पीठादेः प्रणवेना
सादनं दत्वा ॐ व्यापकेश्वराय हृदयाय नमः ॐ व्यापकेश्वर हृदयाय नमः ॐ व्यापकेश्वर
शिरसे स्वाहा ॐ व्यापकेश्वर शिखायै वषट् ॐ व्यापकेश्वर कवचाय हुं ॐ व्यापकेश्व

दुर्गा ८५

५८

स्था

रनेत्रत्रयायवौषट् ॐ अघोरपकेश्वरयअस्त्रायफट् इतिमंत्रैः शिवमर्चयेत् देवतानत्रोद्धारेमूलमं
त्रेणार्चयेत् ततोऽग्निसंस्कारलिंगचालनार्थमूलमंत्रेणतिलाहुतिसहस्रंहुत्वा मंडलदेवता
होमपूर्णाहुतिंचकृत्वा जीर्णमग्नमिदंदेवंसर्वदोषावहंनृणां अस्योद्धारेकृतेशांतिःशा
स्त्रेऽस्मिन्कथितात्वया जीर्णोद्धारविधानेचनृपराष्ट्रहितावहं तत्राधिष्ठितान्देवानुद्धरामि
तवाज्ञयेति देवस्यजीर्णदोषमावधित्वा शिल्पिपुनः सांगंशिवं विसर्ज्ययजमानस्यसौव
र्णिकंकरणंवधासौवर्णरवनित्रेणोद्धृत्यरथमारोप्यनतुच्छायापर्वतदेशेषुद्गमलेचगाध
नदीहूदेवावामदेवेननिक्षिपेत् प्रतिमांतुप्रणवेनक्षिपेत् दारुजंचेदुत्तरेक्षिपेत् रत्न
जंलिंगंयदि निजकांतिमदेवमप्रतिनदाद्देवपूर्ववत्स्थापयेत् सुवर्णादिमयंतदेवसाग्रं
कृत्वास्थापयेत् प्रासादेत्वयंविशेषः प्रासादमंत्रान्खड्गे... रिकायांवासंयोज्यतेन
प्रासादसिद्धिपर्यंतंखड्गादिमंत्रानुयथास्थानंप्रतिष्ठाकालेनास्ययजमानमभिषिंचेत्
ततोलिंगप्रतिमांवापियथोक्तंनकृतंयदि तत्सर्वंपूर्णमेवास्तुत्वत्प्रसादान्महेश्वर कर्तुरा
युः प्रजानांच शांतिर्भवतुसर्वदा अस्माकंशिल्पिनंचैवसुप्रीतोभवसर्वदेति इतिजी
र्णोद्धारविधिः अथसामान्यतः प्राणप्रतिष्ठा प्राणप्रतिष्ठामंत्रस्यब्रह्मविष्णुरुद्राऋ
षयः ऋग्यजुःसामाथर्वाणिछंदांसिसकलजगत्सृष्टिस्थितिसंहारतिरोभावानुग्रहका

राज्यादिकमर्चे...प्रासादसिद्धे ५४

लिं० चं०
८५

50

रुणीपसाद्यालिंगादेवता अः अं ओं औं रं रों लं लृं कं कं ठं कं इं ईं ओं अं ओं आं तः अमुष्यसर्वेंद्रिया
णिमनोवक्त्रि रहंकारश्रिन्द्रियचित्तश्रोत्रवाक्चक्षुःश्रोत्रत्वक्स ह्रीह परसग घ्राणत्वकुच तु
र्जिह्वाघ्राणवाक्पाणिपादपायूपस्थजीवप्राणा इहैवागत्य सुखं चिरं तिष्ठंतु स्वाहा ओं हंसः
सोहं स्वाहा इति प्राणप्रतिष्ठा अग्निमप्रेवाजंभरं ददातीति ऋचैकेन अग्न्युत्तारणं अग्निपद
त्यागः अथ स्थापितलिंगस्य पुनः प्रतिष्ठोक्ता वायवीयसंहितायां अर्चनोपहतं लिंगं वि
शोध्य स्थापयेत्पुनः सद्योदेपद्युपहतं मनागुपहतं यजेत् स्वयंभूतलिंगे चोद्दिष्टे चा
र्चितेप्येवं च अपीठे पीठमावेद्य पक्तं संप्रोक्षणविधिं यजेत् तत्र शिवते यां प्रतिष्ठा नावसी
यते दग्धं अस्पृष्टं नांगवक्षिपेत् लिंगं जलेनाप्ये संधानयोग्यं संधाय प्रतिष्ठाविधिमाचरे
त् एकाहं पूजाविहतो कुर्याद्द्विगुणमर्चनं द्विरात्रे तु महापूजां संप्रोक्षणमतः परं मा
सादूर्ध्वमनेकाहं पूजा यदि विहन्यते प्रतिष्ठैव प्रयत्नेन कश्चित्केचित्तु संप्रोक्षणक्रमः वेदाद्रि
विकत्वात् लिंगादेवं पूजापरः स्मृतं उद्धासहृदि संधानं त्यागवाप्युक्तमाचरेदित्यादि इ
ति लिंगप्रतिष्ठा अथ रसलिंगमहिमा पुरुषार्थप्रबोधे रसार्णवाभिधेयंथे [illegible] देव्याप
ष्टो महेश्वरः श्रोतुमिच्छामि देवेश त्वावक्तुमर्हसि तत्त्वतः अवतारं रसेंद्रस्य माहात्म्यं च म
हेश्वर श्रोतुमिच्छामि देवेश त्वावक्तुमर्हसि [illegible] तत्त्वतः ईश्वर उवाच रसलिंगे स्थिता मुक्तिः

दुर्गा
८५

सकृद्रसमयं लिंगं भक्त्या संपूजयेद्यदि १४

पुण्या शिवसमप्रभा तस्माद्रसमयं लिंगं भक्त्या संपूजयेद्यदि अनंतं तत्त्वपदं गच्छेत्स्वच्छावान्कोन
भावयेत् रसलिंगं तु संपूज्य सर्वपापक्षयो भवेत् दर्शनाद्दुरितं हंति नमस्कारेण दुर्भगान् संपू
ज्य रसलिंगं तु प्राप्यते परमं पदं सर्वान्कामानवाप्नोति रसलिंगस्य पूजनात् मानोन्मानप्रमा
णानि तत्स्य परिकल्पयेत् पूजयेद्रसलिंगं तु प्रियस्य यस्तु भक्तितः सोऽणिमादिगुणैश्वर्ययु
क्तो याति परं पदं डिंभाहतानां तु परं रसलिंगं प्रपूजयेत् डिंभाहता विमुंचंते यांति मुक्तिं परं
त्परां तस्मात्प्रयत्नतः स्थाप्य रसलिंगं शिवध्वज बाते लोके न विधिना रसवंधं तु कारये
त् अथवा वलिनाशास्त्र्या वज्रलेपेन वंधयेत् दिव्यौषधिरसैर्वापि मूर्छयेत्ततः सिद्धयस्तत्र
तिष्ठंति विघ्नसंघवहिष्कृताः रसलिंगं तु संस्थाप्य कोन यात्यभिवाधितं अथवा रससिद्धांतु
मुद्रिकां धारयेत्करे तेनोदक प्रमाप्नोति यद्वदा तिष्ठहोति वा ये प्रदग्धा नराः केचिद्दोपि
पिंडविवर्जिताः डिंभाहतास्तथा चान्ये मृता ये गर्भहेतुतः तन्मुद्रिकाकरे रोवदत्तं तेषु प
तिष्ठते स्कंदे विधाय रसलिंगं तु भक्तियुक्तः समर्चयेत् जगत्त्रितयलिंगानां स पूजा
फलमाप्नुयात् रसलिंगस्य निर्माणप्रकारेण सहादरात् रसलिंगस्य मानात्तं निन्येना
येन वर्णितं निष्कत्रयं हेमपत्रं रसे दत्त्वा निष्कके अम्लेन मर्दयेद्घर्मेते न लिंगं तु कारये
त् दोलायंत्रे रसानालैंजेवीरस्य दिनपचेत् नत्त्लिंगं पूजयेत्तत्र [illegible] भेरूपचारकैः लिंग

रसोपरसलो हादिरत्नेग भैर्तु वंधये त्

वंधये

लिं॰चं॰
८६

52

कोटिसहस्रस्यार्चनेनात् यत्फलं कोटिगुणितं रसलिंगार्चनाद्भवेत् ब्रह्महत्यासहस्राणि गोहत्या
ऽयुतानि च तत्क्षणाद्विलयं यांति रसलिंगस्य दर्शनात् स्पर्शनात्प्राप्यते मुक्तिरिति सत्यं
शिवोदितं सत्वतंत्रपट्टबंधप्रकारं च तथैव हि तेनैव विधियत्नेन बोधकेवानर्चने शिवः ध्ये
ततपीनं ग्रहणं धाम्नश्चतुर्भिर्व्यायथ सन्निभं अग्निभ ४ लिंग ४ ध्येयं यदा तिष्ठे तत्पट्टबंधस्य लक्ष
णं निशाचारी फलान्ते तंत्राद्यं पातालयंत्रके तेन तैलेन देवेशि रसं संकोचयेद्बुधः तत्
क्षणाज्जायते देवि पट्टबंधो महारसः कर्तव्यं कंकणं कार्यं रसलिंगं वरानने मानोन्मा
नप्रमाणादि न तत्सपरिकल्पयेत् इति स्कंदायेश्वरेणोक्तत्वात्किरणागमे पंचसू
त्राद्यपेक्षास्मिन् रसलिंगे न विद्यते तस्माद्रसमयं लिंगं लिंगानामुत्तमोत्तमं रसलिंगस
मं लिंगं नेव कुत्रापि किंचन तस्माद्रसमये लिंगे न वाहनविसर्जने स्थाभिमुख्यादिकं
रणं चास्मिन् लिंगे न विद्यते उपासकमनःपाकात् रूपानंतविग्रहे रसाभिन्नं महादेवं
सांबमूर्त्तिं परात्परं अनुग्रहैकनिरतं सर्वदाभिमुखं स्वयं चिंतयेन्नरसलिंगेन प्रत्येयेद्
क्रमार्गतः यत्तु सिद्धांतग्रासेनादियंत्रचेद्रसलिंगस्यापि प्राणप्रतिष्ठोक्ता सा तांत्रि
कविषया तदुक्तं पुरुषार्थप्रबोधे प्राणप्रतिष्ठानंतोक्ता मूढान्प्रतिय यातया रसस्य
रसलिंगस्य माहात्म्यमविजानतः प्राणप्रतिष्ठापि शाचीनंत्रेण परिमोहितान् ने

दुर्गा
८६

मान्त्रिति शिवेनोक्ता प्रतिष्ठानुष्ठानमति बाणलिंगस्य वैशाल्ये प्रतिष्ठापादिकीरिता स्वयंभु
दिव्यार्षाणां च लिंगानां स्थापिते वहि ने प्रतिष्ठाकृष्टरसलिंगस्य स्थापयेन्नेकथं अथवा
लोहमिश्रत्वाद्युक्तासिद्धांतशासने प्रतिष्ठा तदभावेन सा वक्तनोक्ता रसार्णवे रसर
त्नाकरे लोहमिश्रत्वेपि न सोचिता इति रसलिंगमहिमा अथ लक्षपार्थिवप्रकारः
शिवसर्वस्वे पार्वत्युवाच भगवन्सर्वज्ञ शिवपूजापरायण पार्थिवीं च मह
पूजां कथयस्व महामते सूत उवाच शृणुध्वमृषयः सर्वे रुद्रेण कथितं पुरा यस्य वि
ज्ञानमात्रेण वांछितं फलमश्नुते महोत्पाते च दुर्भिक्षे देशविध्वंसने तथा परचक्राग
मे चैव दुःस्वप्नाद्भुतदर्शने महाव्याधिभये चैव राजचोरभयादिषु महाशत्रुभये चैव
महाशत्रुसमागमे दुष्टव्याधस्य कामस्य कन्याकामस्य एव च विद्याल्लक्ष्मीतथापु
त्रपशुकामस्य तथैव च नरकार्यो वशीकारमोक्षज्ञानादिकधनानि च उच्चाटनस्तंभनथा
त्यानास्यदनानि महान्त्यपि महाबंधविमोक्षे च कस्मिंश्चिच्छत्रुसंकटे परचक्राग
मे चैव जयकामस्तथैव च ऋण त्रयविनिर्मोक्षे महापापक्षये तथा डाकिनीशा
किनी चैव भूतप्रेतपिशाचयोः ज्वरबाधाक्षये चैव लक्षपार्थिवपूजनं कर्त्तव्यं

लिं०चं०
८१

हिश्रयत्नेन स्वेनवाब्राह्मणेस्तथा ३ द्यापनंचकर्त्तव्यंसमाप्तौचप्रयत्नतः रूपयक
चुः विधिर्मासंततथावारेणदत्तंदः वसस्तथा लग्नंयोगश्चकरणंमृदादिद्रव्यमेवच
कथयस्वामलमतेफलंतस्यपृथकपृथक् सूतउवाच पूजारंभस्तुचैत्रेचबहुशोकप्र
दःस्मृतः वैशाखेवांछितार्थःस्याज्ज्येष्ठेमरणमेवच आषाढेक्लेशमाप्नोतिश्राव
णेभृद्धिवर्द्धनं प्रजानाशोभाद्रपदेमहासिद्धिस्ततःपरे कार्त्तिकेनान्यसिद्धिःस्यान्मा
र्गशीर्षेसुखंभवेत् पौषेहानिश्चविज्ञेयामाघेसिद्धिस्ततःपरं फाल्गुनेसर्वसिद्धिस्तु
जायतेसर्वकर्मसु इतिमासाः पूजारंभोरवौभौमेकेबुधेजीवेविशेषतः शनौमृत्युःदा
योभौमेसोमेसिद्धिमवाप्नुयात् इतिवाराः पूजनेप्रतिपन्नेष्टा द्वितीयाकार्यसाधिनी तृ
तीयाद्देममारोग्यंचतुर्थीसिद्धिदाभवेत् पंचमीशुभदाचैवषष्ठीव्याधिविनिर्दिशे
त् सप्तमीशुभदाचैवअष्टमीसुखवर्द्धिनी नवम्यांभोगमाप्नोति दशमीसर्वकामदा
एकादश्युत्तमाज्ञेयाजपहोमार्चनेतथा द्वादशीपुण्यदाप्रोक्तात्रयोदश्यांधनंभवे
त् महतीसातिथिर्ज्ञेयापूजनेपिविशेषतः चतुर्दशीतिविख्यातारिष्टसाराधने
तथा इतितिथिः अश्विनीद्देममारोग्यंभरणीप्राणसंशयः कृत्तिकाक्लेशदाप्रो

54

दुर्गा
८१

ज्ञारोहिण्यांचसुखंभवेत् धनधान्यागमश्चैवनक्षत्रेसोमदैवते आर्द्रायांसुखार्थहिकर्त्तव्यंत्रि
वपूजने पुनर्वसोतथाष्ये दीर्घविंदतिजीवितं सार्पेदुःखंविजानीयान्मघायांचभयंभ
वेत् पूर्वाचसुखदाप्रोक्ता उत्तरात्रयमेवच रेवत्यांचमहासिद्धिर्महादेवस्यपूजने इति
नक्षत्रं विष्कुंभेविजयश्चैवप्रीतिरायुर्विवर्द्धिनी आयुष्मान्भोगदश्चैवसौभाग्येसुख
मश्नुते शोभनेजयमाप्नोतिस्त्वतिगंडेधनक्षयः धृतसिद्धिकरःप्रोक्तोव्यतीपातेधसंद
यः वरीयानेवित्तलाभंपरिघंचविवर्जयेत् शिवेशिवंविजानीयान्महासिद्धिस्ततः
परे वांछितंसाधयेत्साध्येशुभेसौख्यंविवर्द्धयेत् शुक्लेचनिर्मलाबुद्धिःप्रजावृद्धिस्ततः
परे ऐश्वर्यंवर्द्धतेचैंद्रेवैधृतिंसकलंत्यजेत् इतियोगाः ववेचवर्द्धतेसौख्यंधनवृद्धि
त.५ स्तैरे कौलवेकलहःप्रोक्तोनैतिलेसुखमेवचे गरेविघ्नंविजानीयाद्वणिजेवर्द्धतेसुखं
सकलांवर्ज्जयेद्विष्टिंयदिकल्याणमिच्छति शकुनेदृत्यतेपापंचतुष्पदेभयंभवेत् ना
गेदुःखंविजानीयात्किंस्तुघ्नेवैरिसंक्षयः इतिकरणाः मेषेचसुखदंप्रोक्तंवृषेहानिप्र
दंभवेत् मिथुनेसिद्धिमाप्नोतिकर्केचक्षेममेवच सिंहेशत्रुक्षयश्चैवकन्यायांवर्द्धते
सुखं तुलायांचमहालाभोवृश्चिकेवर्द्धतेप्रजाः धनेधनमवाप्नोतिमकरेमृत्युमेवच

यशः श्रीर्जयाकुंभे कीर्त्तिरेवाततः परे इति संक्रांतिः अथ काम्यकर्म्मविशेषमुच्यते पार्थिव
पूजां कर्त्तुकामः आदौ कालशुद्धिं च सावधानः सूर्येंदुबलं चंद्रगणां च वर्त्तने विचार्य्य षडष्टं अर्द्धं सार्द्धं
यथाशक्ति प्रायश्चित्तं वा कुर्यात् तदनंतरं सन्मुहूर्त्ते गणपतिपूजनादि स्वस्तिवाचनांतं कृ
त्वा शुचिः सन् मृत्तिकाग्रहणार्थं गच्छेत् तस्मिन्नेव काले शुभशकुनदर्शनेन स्वकार्यसिद्धि
र्ज्ञेया तत्रापशकुने पुनरपि गायत्रीजपादि यथाशक्ति प्रायश्चित्तं कृत्वा शुभमुहूर्त्ते मृद
हरणार्थं गच्छेत् शुचिप्रदेशे गत्वा गंधादिभिः षोडशोपचारैर्भूमिं संपूज्य नत्वा शिवं हृत्पद्म
स्थं ध्यात्वा ईशानकोणगतां मृदं शस्त्रेणोत्कीर्य्य स्वहस्तेन गृहीत्वा मृद्वादिस्पर्शरहितो
मौनी गृहे आगत्य शुचिस्थले तां धारयेत् अथ यदि स्वयं व्याधिकादूरप्रदेशात्स्वसा
मर्थ्याभावात् आदिद्वारा वेतनपूर्वकं मृदाहरणं तदा स्वयं स्फन्नया कार्यसिद्धिसाधनार्थं
माहरेत् यदि स्वयं ब्रह्मचर्यादि नियमपूर्वकं पार्थिवपूजां कर्त्तुमशक्तस्तदा स्वगुर्वादि
ब्राह्मणद्वारा तां पार्थिवपूजां कारयेत् तदा प्रायश्चित्तादि स्वयं विधाय शांत्यादिगुणसं
पन्नं ब्राह्मणं शास्त्रोक्तरीत्या प्रसिद्ध्या वरणे सामग्र्या वृत्या संप्रार्थ्य तद्द्वारा कारयेत् समा
प्तिपर्यंतं तस्मै भोजनार्थं यथाविभवं वस्त्रद्रव्यादि देयं समाप्तौ उद्यापनं कृत्वा शिवं संतो

कार्यं यथाविभवं प्रतिपार्थिवं सुवर्णं तद्वा रजतं तदभावे ताम्रं तद्दानदक्षिणा तस्मै देया नास्मिन्व्रते
ब्रह्मचर्यादिनियमा ब्राह्मणस्यावश्यका: यजमानस्य विकल्प: पुत्रादिमेहकामनोयो
यजमानेनापि कार्या: तत्र रहस्यमुच्यते उक्तं सरस्वैकवारं सम्यग्विधिना पार्थिवलिंगय
जनेन यदि स्वकार्यं न जातं तर्हि मनसि न विरमेत् किंतु मम प्रतिबंधकदुरदृष्टं दृढं तद्यो नंता
नष्टमिति मत्वा पुनरपि सांगपूजाद्यावर्तनीया यावत्फलं मक्षु स्फुरितिरहस्यं यावत्सत्य
हलिंगानि पूजयितुं शक्यंते तावंति सर्वाणि निर्माय प्रत्येकं प्राणप्रतिष्ठां कृत्वा पंचा
नां सहस्राणां वा युगपद्बहुवचनांतै: प्रयोगै: आवाहनादिविसर्जनांतां पूजां कुर्यादिति शि
ष्टा: प्रत्येकं पूजेति मुख्य: पक्ष: अथोद्यापनं शिवरहस्ये उद्यापनविधिं वक्ष्ये येन पूर्णस
र्वमत्रोचत: यत्कृत्वैवाविलंबेन प्राप्स्यसे चिंतितं फलं उक्तसंख्याकलिंगमानेन सौवर्णं लि
गमुत्तमं संपादनीयं यत्नेन नवलक्षेण लक्षितं राजतान्यपि लिंगानि ताम्रजानि च तत्
दिक्षु संपाद्य हेमवृषभा: कार्या: पंचदशोत्तमा: सुवर्णैरयुतै: कार्यो ह्येकैको वृषभेश्व
र: अन्यूनाऽनतिरिक्तास्तु वृषभेशा: प्रकीर्तिता: एतानि सोपकरणान्युपाद्य यत
त: परं योग्यानि पट्टवस्त्राणि श्वेतान्यरुणवस्त्राणि च तत श्रावणे मासि पौर्णा।

57

मासांविशेषतः उद्यापनं प्रयत्नेन कर्त्तव्यं विधिपूर्वकं ततः पूर्वेद्युः प्रयत्नेन विप्राः षोडशशांक
राः निमंत्रणीया विधिवदर्घ्यदानपुरःसरं आचार्यस्तत्र कर्त्तव्यस्तदन्या शैवपुंगवः तत्र ब्र
ह्मा तु कर्त्तव्यस्तदन्यः शांकरो मतः ततो लिंगानि दुग्धादौ रात्रावधिवास्य यथाविधि मंडपे स्थाप
नीयानि विज्ञानाद्यैः स्वलंकृतैः रात्रौ पूजा प्रयत्नेन कर्त्तव्या विधिपूर्वकं रात्रौ जागरणं का
र्यं रूपोषणपरः सदा ततः प्रातः समुत्थाय स्नात्वा पूजां विधाय च ब्राह्मणैः सहस्वैश्च
शाम्भवैर्यत्नपूर्वकं मध्वाज्यशर्करायुक्तपरमान्नेन सादरं होमः कार्यः प्रयत्नेन प्रत्यंशो
मूलमंत्रतः एवं होमं हुत्वांशेन कर्त्तव्यं ब्रह्मभोजनं लिंगदानानि कार्याणि जावालोक्तवि
धानतः सुवर्णयुतमुक्तं हि दक्षिणा लत्तमा च के वृषभाङ्कितलिंगानि दत्त्वा सोपस्करा
णि च स्वकृतं कर्म कर्त्तव्यं महादेवार्पणं ततः एवं करोति यः सम्यगुद्यापनविधिं शुभं ते
नैव शिवसायुज्यं प्राप्तव्यं नात्र संशयः अत्र होमे द्विजानामेवाधिकारः शूद्राणां केवल
पूजामात्रेण होमे न वैदिकमंत्रस्योक्तत्वात् तदुक्तं लिंगपुराणे होमादिव्यतिरेके
णउद्यापनविधिः स्मृतः शूद्राणां पूजया चैव लिंगदानं तथैव च अथोद्यापनप्रयो
गः संकल्पितदिवससंख्यासमाप्त्यनंतरं मनोरथप्राप्त्यनंतरं वा शुभे मासि श्रावणे।

58

मासि वा पौर्णमास्यां अथवा कृष्णपक्षेऽष्टम्यां च चतुर्दश्यामार्द्रायां सोमवासरे अभ्युदे।
वा चतुर्दशीरोपशोभितं वितानचामरफलपुष्पपल्लवैरलंकृतं मंडपं विधाय तन्मध्ये वे
दिकां कृत्वा गोमयेनोपलिप्य तदुपरि लिंगतोभद्रं विलिख्य तदुपरि कलशं संस्थाप्य उ
त्तमं यावन्मानमृत्तिकया लिंगं करोति तावन्मानेन तदर्द्धेन वा यथाशक्त्यनुसारे।
ण वा सौवर्णेन लिंगं विधाय अन्यान्यपि चतुर्दश रजतलिंगानि विधाय तत्संख्यासुव।
र्णरजतताम्रमयान्यष्टदलपद्मानि विधाय प्रातःस्नानादिकं विधाय मंडपपूजां कृ
त्वा ततः ॐ अपवित्रः पवित्रो वेत्याचम्य प्राणानायम्य देशकालौ संकीर्त्य मम सकलकामनोद्दि
श्यकृतपार्थिवलिंगपूजाफलावाप्तिद्वारा श्रीसदाशिवप्रीत्यर्थं व्रतोद्यापनं करिष्ये
परत्र शिवतत्त्वं करिष्यामीति संकल्प्य चोदोतनमाचार्यं वृत्वा चतुर्दश ब्राह्मणान् विज्ञान् वृ
यात् नैष्ठिकं ब्राह्मणं वृत्वा अस्मन्नूर्जमित्यनेन वाकेन अग्निं सन्धाय वाजंभरं ददाती
ति सूक्तेन वाजलधारया लिंगानामग्न्युत्तारणं कृत्वा पंचगव्यसर्वौषधीभिः रुद्रसूक्तपू
र्वोक्तप्रकारेण प्राणप्रतिष्ठां कृत्वा पूर्वोक्तप्रकारेण पूजां कुर्यात् उपोषणपूर्वकं ना
नाविधोपचारैर्वैदिकैः सूक्तपाठैः पुराणश्रवणगीतवादित्रनृत्यैः प्रातःकालप

लिं० चं०
२०

र्यंतं जागरणं कृत्वा प्रभाते स्नानादिकं पूर्वोक्तमार्गेण शिवपूजां विधाय देवस्य पुरतः स्वगृह्योक्तप्र
कारेणाग्निं प्रतिष्ठाप्याज्यभागांतं कृत्वा पायसमधुशर्करायुक्ततिलाक्षतबिल्वपत्रशत
पत्रादिद्रव्येण मृत्युंजयाख्यवैदिकमंत्रैः पंचाक्षरेण च लिंगसंख्यापर्याप्तं होमं जुहुयात् होम
शेषं समाप्य पूर्णाहुतिं हुत्वा पुनः शिवं पूजयेत् गोहिरण्यवासांसि छत्रचामरवाहना
नि पर्यंककंकणमुकुटादीनि आचार्यादिभ्यः समर्प्य दंडवत्प्रणम्य प्रधानलिंगमा
चार्याय तथान्यानि चतुर्दश लिंगानि सवृषभानि ऋत्विग्भ्यो दत्वा ब्रह्मणे पूर्णपा
त्रं दत्वा ततो होमदशांशावृत्त्या द्वात्रिंशान् एकादश पंच वा यथाशक्त्या वा ब्राह्म
णान् भोजयित्वा इष्टैः सह स्वयं पारणं कुर्यात् इति पार्थिवोद्यापनप्रयोगः अथ लिंग
दानं शिवरहस्ये पार्वत्युवाच देवदेव महादेव लिंगदानविधिं वद लिंगदानविधिं फलं
वापि वद मह्यं कृपानिधे शिव उवाच काश्मीरकांचनादीनि लिंगानि विविधान्यपि
देयान्युत्पन्नयत्नेन मत्प्रीत्यर्थं मुमुक्षुभिः शिवरात्रौ सोमवारे ग्रहणे चंद्रसूर्ययोः
संक्रांतिष्वपि कर्तव्यं लिंगदानं विशेषतः उपोष्य पूर्वदिवसे शैवान्संपूज्य साद
रं प्रार्थनीयास्त्वदाज्ञया वा लिंगदानार्थमादरात् ततो देयानि लिंगानि दीक्षितेभ्यो वि

६०

दुर्गा
६०

धिपूर्वकं स्नापयित्वार्चनीयानि बिल्वपत्राणि भःशिवे सौवर्णे रजते वापि ताम्रे वा भाज
नेन वे नवं वस्त्रसमाच्छन्ने शिवलिंगे निवेदयेत् ततः पुनः श्रयत्नेन भस्मबिल्वदलादि
भिः संपूज्य घृतौदनपक्वान्नैर्नैवेद्यानि समर्पयेत् रात्रौ जागरणं कार्यं भक्तिश्रद्धापुरःस
रं प्रतिमासेपि कर्त्तव्यं बिल्वपत्रैर्मदर्चनं नैवेद्यं देयं मम त्वं मम संयामचतुर्दश्ये ततः प्रा
तः समुत्थाय कृत्वा स्नानादिकं तथा ब्राह्मणानां पूजनं कार्यं मधुपर्कपुरःसरं ततः सुवर्ण
सहितं वस्त्रयुग्मसमन्वितं ग्राह्यं सपात्रं हस्ते नेमं मंत्रा ने तां स्नजतः पठेत् शिवलिंगे शिवा
कारे भुवनानि चतुर्दश तस्मात्स्वप्रदानेन प्रीयतां भगवान् शिवः कैलासवासी गौ
रीशो भगवान् भगनेत्रभित् चराचरात्मको लिंगरूपी दिशतु वांछितं इदं काञ्चनी ज्योति
र्लिंगं शैलपीठसमन्वितं धान्यैर्दशाभ्युक्तमेकादशफलान्वितं ददामि द्विजवर्याय यु
ष्मोक्तफलमस्तु मे इदं मारकत लिंग मि ति लिंगान्तरे ऊहः कार्यः इमं मंत्रं समुच्चार्य
शि॰ गं॰ २४ शिवमप्यात्मकं मद्धस्ताय प्रदातव्यं जलदानपुरःसरं देवस्यत्वेति राजत्वेत्यादि मंत्रा।
स्ततः परं प्रतिगृहीत्वा यत्नेन पठनीया यथाक्रमं दक्षिणा तावती देया न्यूनं भवति
यावता सुवर्णानां सहस्रं वा यथाप्येयास्वशक्तितः दशदानानि कार्याणि ततः शान्त्य

लिं०वं ६१

नुसारतः ततः कार्यं कृतं कर्म शिवे सर्वं समर्पयेत् एवं यः कुरुते भक्त्या लिंगदानं यथाविधि स
महापापसंघेभ्यः सद्य एव प्रमुच्यते द्वादशधान्यानि पात्रे व्रीहयश्च यवाश्चैव गोधूमाः
कंकुसर्षपाः माषा मुद्गाश्च चणकाश्च मसूराश्च कुलत्थकाः श्यामाकाश्चैव नीवाराः शांज
तिलाः शठवेधुकाः ज्ञेयानि द्वादशैतानि धान्यानि मुनिभिस्तथा दत्तादानानि स्कांदे
गोभूतिलहिरण्याज्यवासो धान्यं गुडं तथा रौप्यं लवणमित्याहुर्दशदानानि पंडिताः
तत्र दशदानप्रयोगः ब्राह्मणपादप्रक्षालनादर्चनानन्तरं सतिलयवकुशजलमा
दाय लिंगदानांगभूतामिमां गां अथवा गोनिष्क्रयभूतं यथाशक्ति द्रव्यं यथानामगो
त्राय ब्राह्मणाय संप्रददे लिंगदानांगभूतां भुवं संप्रददे लिंगदानांगभूतं यथाशक्ति
गुडं संप्रददे लिंगदानांगभूतं यथाशक्ति रौप्यं संप्रददे लिंगदानांगभूतं लवणं संप्र
ददे इति लिंगदानं प्रकृतमनुसरामः पूजान्ते पश्चात् जपः कार्यः तदुक्तं शिवरह
स्ये कर्त्तव्यः शिवपूजान्ते पश्चात् जपो द्विजोत्तम इति स्कांदेपि नमस्कारो जपश्चैव सर्वाभी
ष्टप्रदावुभौ पूजान्ते च सदा कार्यौ भोगमोक्षार्थिभिर्नरैरिति जपसंख्या ज्ञानत्रैव
द्विषट्सहस्रं जप्तव्यः शैवपंचाक्षरजपः सहस्रमष्टदेन ज्ञानमष्टोत्तरं तथा रु

62

दुर्गा
६

लैस्तथा सवाहनाश्च कर्त्तव्या राजन्य: प्रतिमास्तथा स्थापयेत्प्रतिमास्तत्र भावतेनैव समाहि

तैः तत्रह्निंगोड्रवैर्मंत्रैः षोडशैरुपचारकैः पूजयेत्तत्र देवेशं पार्वतीसहितं तथा लक्ष्म्या

विष्णुं च सावित्र्या ब्राह्मणं पूजयेत्ततः दुर्गां गणपतिं चैव भैरवं स्कंदमेव च नैवेद्यैर्विविधा

कारैर्भक्ष्यभोज्यसमन्वितैः फलैः पुष्पैश्च दीपैश्च कर्पूररसंभवैः उपोष्य तद्दिने रात्रौ जागरं

चैव कारयेत् वेदवादित्रनिर्घोषैः पुराणश्रवणेनवा स्तोत्रपाठैः स्तवैस्तां तां निद्रां न

कामयेत्सुधीः ततः प्रभातसमये विधिवत्स्नानमाचरेत् स्थंडिलं कारयेत्तत्र स्वशाखो

क्तविधानतः हवनं शिवमंत्रेण कुर्याद्द्विजोत्तमं ततः ब्रह्मणश्चापि मंत्रेण तत्तत्कीनां

मपि मंत्रतः तत्रह्निंगोड्रवैश्चैव दुर्गादीनामपि द्विजः इंद्रादिलोकपालानां पायसै

स्तु सशर्करैः तिलाज्येनापि वा कुर्यात्सहस्रं वाष्टोत्तरं शतं प्रतिद्रव्यं प्रकर्त्तव्यं मध्यविंशति

संख्यया दुर्गादीनां च कर्त्तव्यमिंद्रादीनष्टसंख्यया समाप्य विधिवद्धोममाचार्यं पूजयेत्त

तः उष्णीषं कंचुकं वस्त्रद्वयं वासे मुद्रिकास्तथा शय्यासनविचित्रैश्च कुंडलांगुलकैस्त

था तथोपानहौ गंधं च गडुकान्कलशांस्तथा प्रदद्याद्दक्षिणां चैव वित्तशाठ्यविव

र्जितः गां च पयस्विनीं दद्यान्नवा सोपस्करां तथा सवत्सां स्वर्णशृंगां च ताम्रपृष्ठां

मि० चं० ५६

दुर्गा ५६

देवपूजापूर्णफलाप्तये कलशस्थापनं सर्वं स्थापनं विना द्विजाः आहूय वारुणान्सर्वान्सु
पूर्णकुंभे दिने यज्ञवेदीस्थापनं कुर्यात् मंडपं तत्र कारयेत् पुष्पमालान्वितं कुर्यात् नानावस्त्रस
मन्वितं आदर्शैर्भूषयेत्स्नात्वा नवे दिग्बलं कल्पयेत् गीतवादित्रनिर्घोषैर्वेदघोषैः समन्वि
तः प्रविश्य मंडपे तस्मिन्नाचार्येण द्विजैः सह पुण्याहं वाचयेत्पश्चादाचार्यवरणं ततः
ऋत्विजोऽप्यत्र वृत्वा वै षोडशा [illegible] भाजनानि च तेषां वापि संपूज्य वस्त्रालंकारभूषणैः
आचार्यं द्विगुणं स्याच्च अन्यथा विफलं भवेत् वेदिकायां तत्कर्तव्यं सर्वतोभद्रसंज्ञकं मं
डलं स्वस्तिकं वापि लिंगतोभद्रमेव वा तन्मध्ये विधिवद्द्विजास्तंडुलैः प्रस्थमात्रकैः कैला
सं रचयेत्तस्मिन्वैकुंठं [illegible] हरिं तत्र शोभनं कुर्यात्सत्यलोकं तु वामतः गोधू
मैश्चापि कुर्वीत कलशान्स्थापयेत्ततः अयतो [illegible] वर्णान्स्वराज्ञान [illegible]
ताम्रमयान्वापि मार्त्तिकान्वा सुशोभनान् अकालचिह्नितान् [illegible] जलैः पिहिता
ननान् पंचपल्लवसंयुक्तान्पंचरत्नसमन्वितान् वस्त्रयुग्मेन संवेष्ट्य कैलासक
लशं वा वैकुंठं पीतयुग्मेन रक्तयुग्मेन सत्यकं कलशान् पि संवेष्ट्य भाजनेषु च सौ
वर्णप्रतिमा कार्या देवादीनां क्रमेण च त्रिंशं वा विष्णुपत्न्या न दत्त्वा नां सावित्री ब्रा